परिषद्-ग्रन्थमालायाः एकविंशतितमं पुष्पम्——२१

वाग्योगविद्-श्रीसरस्वतीप्रसादचतुर्वेदि-कृतानाम्
अगाधज्ञानमूलकनिबन्धानां संकलनम्

# सारस्वत-सन्दर्शनम्

# SĀRASWATA-SANDARṢANAM

भारती परिषद् • प्रयागः
१८९४ शकाब्दः

BHĀRAṬĪ PARISHAD, PRAYĀGAH
1973 A. D.

# ऋतञ्च सत्यञ्च

⊙

नैतत्तिरोहितं गीर्वाणवाणीजुषां मनीषिणां यद्देववाणी हि खलु शैवशाक्तवैष्णवजैनबौद्धादिनानासम्प्रदायेषु विभक्तानां विभिन्नमतिजुषाम् आपाततः परस्परविरुद्धत्वेन प्रतीयमानानामपि तेषु तेषु सम्प्रदायेषु तेषु तेषु मतेषु च आवर्त्तबुद्बुद्तरङ्गमयान् विकारान् अम्भो यथा सलिलमेव हि तत्समस्तम्——इति न्यायेनैकसूत्ररूपेण ओतप्रोतया एकयैव व्यापिकया भारतीयया लौकिकसंस्कृत्या परस्परं सम्बद्धानां सर्वेषामप्यस्माकं भारतीयसंस्कृत्यभिमानिनामतीव माननीया।

संस्कृतभाषा हि भारतीयार्यधर्म इव सर्वेषामप्यार्यधर्मावलम्बिनां वरिष्ठः शेवधिर्गर्वस्य च विषयः। भारतीयसंस्कृतीत्यपरनामधेयस्य भारतीयजीवनरसस्य सर्वकामदुघा दोग्ध्री वेयमस्माकं मातृरूपा देववाणी।

अत एव तस्याः परिपोषणेनैव भारतीयसंस्कृतेः परिपुष्टिस्समुन्नतिश्च संभवति इत्येवमवधार्य विविधभाषायामुपनिबद्धानामनुसन्धानमूलकनिबन्धानां प्रकाशने भारतीपरिषद् दृढपरिकरा तिष्ठति।

विद्वद्धौरेयैः स्वोपज्ञविचारविचारकैर्निबद्धानामनुसन्धानमूलकानामन्येषाञ्चोपयोगिनां प्राचीनानां नवीनानां वा निबन्धानां प्रकाशनेन संस्कृतज्ञेषु अद्य यावदमुद्रितं मुद्रितं चोत्कृष्टं विभिन्नशाखासमन्वितं संस्कृतवाङ्मयमधिकृत्य मौलिकानुसन्धानप्रवृत्तेः सम्यगालोचनाप्रवृत्तेश्चोत्पादनं पोषणम् प्रोत्साहनञ्चैवास्याः भारतीपरिषदः उद्देश्यम्।

अतो भारतीयस्वाधीनतायाः रजतजयन्त्या अवसरमुद्दिश्य विविधनिबन्धालङ्कृतः एषः 'सारस्वत-सन्दर्शनम्' नाम ग्रन्थः प्रकाश्यते।

मकरमासे
२०२९ वै०

**देवदत्त शास्त्री**
**सम्पादकः (भारतश्रीः)**

# आमुखम्

पदवाक्यप्रमाणतत्वज्ञस्य आचार्यसरस्वतीप्रसादचतुर्वेदिनः एकसप्ततितमवर्धापन—दिवसे प्रयागस्थ-भारती परिषदा समायोजितेऽभिनन्दनप्रसंगे काप्यपूर्वा उत्सव-पद्धतिः प्रक्रम्यते। स्वजीवनस्य प्रदीर्घे अध्ययनाध्यापनकाले विभिन्नावसरेषु विभिन्नभाषाः अवलम्ब्य विविधविषयानधिकृत्य च ये लेखाः आचार्य-चतुर्वेदिमहाभागैः प्राकाश्यं नीताः तेषां सविवेकमेकत्र सङ्ग्रहः "सारस्वत-सन्दर्शनम्" त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये" "ब्रह्मार्पणं ब्रह्महवि" रित्यादि श्लोकानुसारम् तेभ्य एव समर्प्यते इत्यहो अजुष्टपूर्वः सम्मानप्रदर्शन-प्रकारः। तथा विवसभाजनं कुर्वती चेयं भारती परिषद् विद्वत्समाजेऽतिस्पृहणीयम् सरस्वतीसंस्कृत्योः समादरं विदधातीति परमप्रमोदस्थानम्। सप्रहर्षमिदमपि विज्ञापनीयम् यत् आकाशवाणी-वार्ता-प्रसारावसरेषु लब्धजन्मनाम् संग्रहस्थानाम् केषाञ्चन अल्पसंख्यानां लेखानां विषये आकाशवाणी संस्थानं प्रति अधमर्णत्वद्योतकं कृतज्ञताभावं व्यनक्ति परिषदियम्।

"सारस्वत संदर्शनम्" इति प्रस्तुत-ग्रन्थाभिधाने "नामैकदेशग्रहणे नामग्रहणम्" इति नियमानुसारं 'सरस्वतीपदं' 'सरस्वतीप्रसाद' पदम् अभिधन्ते। सरस्वत्याः इदं सारस्वतम् इति व्युत्पत्या सारस्वतपदं सरस्वतीप्रसादस्य सम्पूर्णवाङ्मयीनकृतिरूपार्थेऽभिप्रेतम्। 'सन्दर्शनम्' तु सम्यक् (साकल्येन) दर्शनम् इत्यर्थेऽभिमतम्। तथा च 'सारस्वतसन्दर्शन' मिति 'पदं सरस्वती प्रसादस्य सर्ववाङ्मयीन कृतित्वम्—व्यक्तित्वपरिचायकं सम्पूर्णलेखनकर्म वैविध्यं प्राप्तवतः अर्जितज्ञानस्य प्रकाशितलेखेषु सङ्क्रमणेन मूर्ततां नीता या व्यक्तिः तस्याः अविकलं प्रतिविम्वितं रूपम्; एतत्सर्वं यथा ग्रन्थपठनेनैव अवलोकनपथं गच्छेत् तथाप्रयोजनकं प्रकाशनं 'सारस्वत-सन्दर्शनम्' इति पदाभिधेयं भवति।

किञ्च सारस्वतमित्यस्य अपरोऽप्यर्थोऽभिप्रेतः। विद्याधिष्ठातृदेवतायाः सरस्वत्याः इदं सारस्वतम्—तथैव समुद्रापरपर्यायस्य सरस्वत इदमित्यपि सारस्वतमभिधातुम् शक्यते। एवं द्विविधं सारस्वतं ज्ञानसमुद्रार्थे पर्यवस्यति। समुद्रो गाम्भीर्येऽगाधः परिमाणे च अतिविस्तृत इति गुणपरिमाणयोर्द्वयोरपि दृष्ट्या दुष्प्रापतया अपरिमेयतायाश्च प्रतीकं भवति। तथा चात्र 'सारस्वत-सन्दर्शने' अनन्तशाखोपबृंहितस्य आश्चर्यावहस्य वैविधीपूर्णस्य ज्ञानराशेश्छटा नेत्रगोचरीभवति। अतः 'अनन्तपारं किल शास्त्रवर्त्म' इति सुभाषितं चरितार्थं भवति।

अपरञ्च सारस्वतम् इति पदद्वयात्मकम्। किं तत् पदद्वयम्? सारः स्वता च। तत्र सार-शब्दः स्थिरांशवाचकः, स्वता-शब्दश्च स्वस्य भावः स्वता इति व्युत्पत्या स्वीयं, स्वकीयं, स्वकार्य-पद्धतिः, स्वप्रतिपादनप्रकारः इति क्रमिकार्थविकासे पर्यवस्यति। एवं यत् स्थैर्यार्हं, क्षणिक-विचारापेक्षया ध्रुवं, अचलं तत् सारशब्दस्यार्थः। स्वताशब्दस्तु स्ववैशिष्ट्यरूपार्थमभिधत्ते। सारः स्वता च इति सारस्वते। ते स्तः अस्मिन्नित्यर्थे सारस्वत शब्दो निष्पन्नः। स च सारःस्वतेति

उभय-समुपेतम् सकलम्---अर्थम् व्यनक्ति। तथाविधं सन्दर्शनं 'सारस्वत-सन्दर्शनं' भवति। अर्थात् यत्र प्रतिपाद्यविषयाणां स्थैर्यार्हः सारभूतः अंशः व्यक्तित्वपरिचयश्च लभ्येते इति 'सारस्वत-सन्दर्शनम्' इत्यस्य अभिप्रेतार्थद्योतिका शब्दव्युत्पत्तिः।

इदानीं तत्राभिप्रेतं वैशिष्ट्यं विशदीक्रियते। इदं प्रस्तुतं 'सारस्वत-सन्दर्शनम्' आचार्य सरस्वतीप्रसादचतुर्वेदिनां वाङ्मयीनसकलकृतित्वस्य एकत्रस्थं निदर्शनम् अस्ति। सोऽयं ग्रन्थः चत्वारिंशद्वर्षव्यापिन्यासरस्वतीसाधनायाः प्रसादः। चिन्तनशीलेषु भारतीयमनीषिषु आचार्य चतुर्वेदिमहोदयानां स्वीयं विशिष्टं स्थानम्। अस्मिन् सन्दर्शने तेषाम् संस्कृते, हिन्द्याम्, आंग्ल्यां च निबद्धानां, विविधविषयकानां, विभिन्नकालेषु प्राकाश्यं नीतानां च निबन्धानां सङ्ग्रहः। अत्र चतुर्वेदि-महोदयैः स्वीयागाधज्ञानस्य त्रिविधं उन्मीलनं कृतम्। प्रथमं तावत् पूर्वापरौ ज्ञाननिधी वगाह्य वाङ्मयस्थ शास्त्रीयं चिन्तनम् अनुसन्धानञ्च। द्वितीय पक्षः भारतीय समाजे धार्मिकीनां सांस्कृतिकीनाञ्च मान्यतानां साक्षात् करणं परामर्शश्च, उन्मीलनस्थ तृतीयविधं क्षेत्रं स काल प्रवाहः यः विविधस्थितिषु संस्कृत-संस्कृत्यनुरागरञ्जितपथमारुह्य गतिमत्त्वम् लभते। त्रिविधोऽयं दर्शनप्रकारः सारस्वत-साधनायाः गौरवशालि वैशिष्टयम्। इदं वैशिष्ट्यं सम्यक् संरक्षितुम् सर्वेऽपि निबन्धाः स्वीयेन अविकलरूपेणैव-किञ्चिदपि परिवर्तनम् अकृत्वा सस्थानकालनिर्देशं प्रकाश्यन्ते।

अत्र सरस्वतीसमाराधकानाम् आचार्यचतुर्वेदिनाम् अगाधज्ञानपरिप्लुतम् अन्तर्गूढं व्यक्तित्वम् अभ्युदेति। दृश्येत नाम एषु निबन्धेषु स्यात् तादृशी विचारधारा, या अंशेषु अग्राह्या असंगता च स्यात् अथवा या ऐतिहासिकीनां कथानां विषयः, भाषा दृष्ट्या अनतिरमणीया प्रतीयेत। किन्तु सर्वेऽपि विचाराः निबन्धकालम् उज्जीवयन्ति इति निःसंशयं वचः। तेषां प्रेरणाभूताः आलोचनप्रकाराः स्वकालीनं तत्सत्यं प्रादुर्भावयन्ति, यस्य सदुपयोगः शाश्वतिकः अनिर्वादश्च भवितुर्महति। वेदस्य, व्याकरणस्य, साहित्यस्य, धर्मस्य, संस्कृतेः, दर्शनस्य, भाषाशास्त्रस्य, शिक्षा-शास्त्रस्य च विषये, तत्कालानुरूपां विविधच्छटामयीं स्मृतिं पुरतः समुपस्थापयत् इदं 'सारस्वत-संदर्शनम्' साधकेभ्यः सिद्धेभ्यश्च समानरूपेण ज्ञानरश्मि-विकिरणकरं भवेदिति अस्माकं मनोरथः तं सन्तः क्षन्तुमर्हन्ति सदसद्व्यक्तिहेतवः।

**भारती परिषद्**
**प्रयागः**

**श्रीधर शास्त्री**
**महामंत्री**

चारित्र्ययोगयुक्तः दिसापामोक्ख आचार्यः

## महाप्राज्ञः श्री सरस्वतीप्रसाद चतुर्वेदी

शान्ता सौजन्यपूर्णा परमसुखमयी दिव्यमूर्त्तिः पवित्रा
सर्वेषां सौख्यदात्री नयनसुखसुधावर्षिणी कापि रम्या।
सत्यज्ञानप्रकाशप्रकटितमहिमा मानयोग्या गुणाढ्या
भूयाद् भूयोऽघहन्त्री सकलजनमनोहारिणी भव्यभावा।।

[सुरभारती]

'पद्मभूषण, पण्डितराज'

## श्री राजेश्वर शास्त्री द्राविड़

**राजमान्य-पण्डितकुलमण्डन-भूतपूर्व प्रयागविश्वविद्यालयीयसंस्कृतविभागाध्यक्ष-महाप्राज्ञ-सरस्वतीप्रसादचतुर्वेदिमहोदयानां "सारस्वत सन्दर्शन"--**

# सम्माननाभिनन्दनम्

राकासुधाकरविसृत्वरचन्द्रिकाभशोभातिशायियशसा विशदीकृताशः।
अन्वर्थतोऽपि चरितार्थितनामधेयः श्रेयान् श्रुतेन स भवानभिनन्दनीयः॥१॥

स्वर्गी सदाशिवसमाधवसत्पराण्डे न्यायाधिराडवसरेष यथाध्यवोचत्।
आर्यस्य विश्रुतकुलस्य सरस्वतीप्रसादस्य हन्त! तमुदन्तमिह स्मरामः॥२॥

तच्चाद्भुतं भवदुदात्तकुले प्रवृत्तं कश्चित् पितुः प्रतिनिधिः प्रतिपूज्य देवीम्।
भोक्तुं निवेद्यमथ मोक्तुमपि प्रसादं बालो हठेन विवशीकृतवान् महात्मा॥३॥

श्रीमान् प्रयागगतविश्रुतविश्वविद्यास्थानेऽभवत् निजविभागपदप्रधानः।
सर्वाङ्गसुन्दरमुपास्य सुरेन्द्रभाषां सम्यङ्मनः सुमनसां सुरभीचकार॥४॥

धीरो विपत्तिषु समृद्धिषु चात्युदारः शास्त्रेषु च व्यसनवान् रुचिमान्यशःसु।
इत्थं महात्मसु सदा प्रथिताः प्रशस्ताः स्वादर्शसद्गुणगणाः स्पृहयन्ति यस्मै॥५॥

सारस्वतं सुमहताऽद्य समादरेण सन्दर्शनं समुदिता महनीयमान्याः।
सम्भावयन्ति यदमी तदतीव हृष्टा मान्यस्य माननविधेः प्रणयन्ति नीतिम्॥६॥

१८. ३. ७३.

डॉक्टर रामकरण शर्मा
विशेषाधिकारी-संस्कृत
केन्द्रीय शिक्षा मंत्रालय, नई दिल्ली

●

सरस्वत्याः प्रसादोऽसि चतुर्वेदविशारदः।
विद्वदग्रेसर श्रीमन् नित्यमेव नमोऽस्तु ते ॥
धन्येयं मकरन्दमर्मकुशला रोलम्बमालावली
यस्याः सन्ति रसा इमे सुमधुरास्त्यक्ता अपि प्रीतिदाः।
त्वामुत्सृष्टरसं स्वयं सुमधुरं दत्तप्रमोदोदयं
वीक्ष्येयं मधुहृत्प्रयासविजिता रेफद्वयी लज्जते ॥
एषा नः सुरभारती सुललिता कल्याणशान्तिप्रदा
विद्याकर्मजुषामुदीक्षत इमां श्रीत्वदृशां दृक्नतिम्।
वाला बालनिसर्गकर्ममतयः शश्रूषवो मादृशाः
सस्नेहं सकृपं भवद्भिरनयोः प्राप्या अमुष्याः पदोः ॥

शिवा स्यात् संस्कृता सृष्टिः
संकरध्वंसनात् परम्।
चिन्मयी सत्कलायुक्ता
विज्ञानाध्यात्मसंयुता ॥
तस्या एव वयं विप्रा
युवानः प्रयतामहै।
भृतिभोगेन लुब्धेन
नास्माकं चरितार्थता ॥

[आचार्य-चतुर्वेदिनां शिक्षामंत्रालयपदात् प्रयागागमनानन्तरं ७.२.१९६१ दिनांके प्रेषितम्]

# आचार्य-सरस्वतीप्रसादचतुर्वेदिनां
# जन्मादिविवरणम्

**जन्म** : १९५९ तमे वैक्रमाब्दे श्रावणशुक्लद्वितीयायां भौमवासरे, पूर्वाह्णे मघानक्षत्रस्य तृतीये चरणे, सिंहराशौ।

**जन्मस्थानम्** : ग्रामः—लालापुरम्, पत्रालयः—लालापुर - भटपुरा, परगना—बारा, तहसील—करछना, जनपदम्—इलाहाबादः।

**वंशाख्यातिः** : सरयूपारीणब्राह्मणः (नयपुरा – चतुर्वेदी), सांकृत्यगोत्रम्, त्रिप्रवरः (आंगिरस, गौरवीति, साङ्कृत्य) वाजसनेयशुक्लयजुर्वेदान्तर्गतमाध्यन्दिनीयशाखा।

**शिक्षास्थानानि** :
(१) धर्मज्ञानोपदेश संस्कृत महाविद्यालयः, मालवीयनगरः, प्रयागः।
(२) संस्कृत महाविद्यालयः, हिन्दू युनिवर्सिटी, वाराणसी।
(३) दयानन्द एंग्लो वैदिक विद्यालयः, प्रयागः।
(४) गवर्नमेन्ट इण्टर कालेज, इलाहाबादः।
(५) इलाहाबाद युनिवर्सिटी।

**उत्तीर्ण परीक्षा** :
(१) आचार्य-परीक्षा (व्याकरणे) १९२५ तमे ईस्वी वर्षे।
(२) काव्यतीर्थपरीक्षा (साहित्ये) १९२६ तमे ईस्वी वर्षे।
(३) एम० ए० (वैदिक वाङ्मये) १९२९ तमे ईस्वी वर्षे।

**सेवा-विवरणम्** :
(१) मध्यप्रदेशस्य शिक्षा विभागे (क वर्ग) शैक्षणिक कार्यम् (१९२९-५८)
(२) केन्द्रीय शिक्षा मंत्रालये संस्कृत विशेषाधिकारी, केन्द्रीय संस्कृतमण्डलस्य सचिवश्च (५९-६१)
(३) संस्कृतविभागाध्यक्षः इलाहाबाद, विश्वविद्यालये (६१-६६)
(४) केन्द्रीय विश्वविद्यालयानुदान-आयोगेन पुरस्कृतः इलाहाबाद विश्वविद्यालये सम्मान्यप्राध्यापकः। (१९६६-७१)

**अधिष्ठित पदानि** :
(१) नागपुर-सागर-इलाहाबाद विश्वविद्यालयेषु संस्कृत-विभागाध्यक्षः
(२) अखिलभारतीय-प्राच्यविद्यासम्मेलनस्य (१९५५ तमे ई० अन्नामलइ-नगरे) संस्कृतशाखाधिवेशनेऽध्यक्षः।
(३) केन्द्रीयसंस्कृतमण्डलस्य सचिवः। (१९५९-६१)
(४) भारतीयविश्वविद्यालयैः शोध-प्रबन्धपरीक्षा-प्राध्यापकनियुक्ति-पाठ्यक्रमनिर्माणप्रभृतिकार्येषु निमन्त्रितः।
(५) केन्द्रीयशासनेन प्रदेशीयशासनेन च आमन्त्रितेषु संस्कृतशिक्षा-परामर्शसम्मेलनेषु प्रतिनिधित्वेन समाहूतः।
(६) केन्द्रीयशासनस्य आकाशवाणी-संस्कृतकार्यक्रम-परामर्श-समितौ सदस्यः।
(७) केन्द्रीय संस्कृतअकादमी-संस्थानेन महावैयाकरणमालायां पतंजलिविषयकं ग्रन्थं रचयितुं, मध्यप्रदेशीय-साहित्य-अकादमी संस्थानेन च कृष्णविषयक-व्याख्यानमालायां "पुराणेतरसंस्कृतवाङ्मये श्रीकृष्णस्वरूपम्" इति विषयमधिकृत्य भाषणानि कर्तुं समानदेयं समाहूतः।

---

**सम्प्रति निवासस्थानम्** : 'सारस्वत भवनम्', २५ स्टैनलीरोड, इलाहाबादः—२।

# पण्डित सरस्वतीप्रसाद चतुर्वेदी

[ संक्षिप्त परिचय ]

पण्डित सरस्वतीप्रसाद चतुर्वेदी चतुरस्र प्रतिभा, वैदुष्यपूर्ण वाग्मिता, निश्छल सहृदयता, शालीनता और सुजनता के धनी हैं। उनके सौम्य मनोरम व्यक्तित्व में किसी के प्रति विरोध या वैमत्य का सामान्यतया कोई स्थान नहीं है। गेहुँए रंग के, नातिस्थूल, नातिदीर्घ, श्रेष्ठिजनोचित, मंझोले कद के उनके सुदर्शन स्वस्थ शरीर तथा कभी भारतीय और कभी पाश्चात्य परम्परा के मिश्रित परिधान को देख कर सहसा यह भान नहीं होता कि वे विचक्षण प्रतिभा और निर्मल प्रज्ञा के महान व्यक्ति हैं। किन्तु साधारण बातचीत के अनन्तर ज्यों ही उनकी अगाध विद्या और तथ्यवती चिन्तनधारा का सहज प्रवाह प्रस्फुटित होता है, तो किसी का भी भावविभोर होकर निमज्जित हो जाना सुकर है। वे न केवल भारतीय और पाश्चात्य दर्शन, व्याकरण, वैदिक एवं संस्कृत-साहित्य के उद्‌भट विद्वान हैं, अपितु अंग्रेजी तथा हिन्दी-साहित्य एवं अन्यान्य भारतीय भाषाओं के साहित्य में भी उनकी गहरी पैठ है। निरन्तर स्वाध्याय और चिन्तन उनका व्यसन है, वाग्देवी की वन्दना और आराधना उनका व्रत है तथा यथा नाम तथा गुण की लोकोक्ति को चरितार्थ करने वाले वे विरल महानुभाव हैं। संयम उनकी वाणी और लेखनी का श्रृंगार है। अपने सहज-प्रसन्न स्वभाव के कारण वे गूढ़ातिगूढ़ विषयों को भी अपनी प्रसादगुण-मिश्रित शैली में जब प्रतिपादित करने लगते हैं, तो उनका वैदुष्य देखते और सुनते ही बनता है। सभाओं में वे वक्ताओं और श्रोताओं को अभिभूत कर देते हैं और अपनी महनीय उपस्थिति से साधारण गोष्ठी को भी महिमामयी बना देते हैं। निरभिमानिता की वे मूर्ति हैं। उनकी ईषत्‌स्मित संभाषण शैली और तर्क पद्धति बहुत ही आकर्षक होती है और सर्वथा विरोधी विचारधारा वाले व्यक्तियों को भी वे प्रभावित किए बिना नहीं छोड़ते। उनमें अगाध पांडित्य और अध्ययनशीलता के साथ सहृदयता और कर्त्तव्यपरायणता का अद्‌भुत मेल है। जो भी काम वे हाथ में लेते हैं, उसका निर्वहण भलीभांति करते हैं। विद्याव्यसनियों के वे सहज अनुरागी हैं। विद्या के क्षेत्र में प्रमाद और आलस्य से उनका विरोध है। अहर्निश अध्ययन, अनुशीलन और चिन्तन के प्रति जागरूक रहकर उन्होंने अपना यशस्वी अध्यापक जीवन जिस ढंग से जिया है, वैसा बहुत कम लोग जी पाते हैं। एक बार भी जो उनका छात्र रह चका है, वह आजीवन उनका पुजारी बन गया है। अपने अन्तेवासियों के प्रति नितान्त निष्कपट अनुराग के कारण उनकी कीर्तिलता का विस्तार समूचे भारत में है। अपनी जन्मभूमि से सैकड़ों कोस दूर रह कर जिस कर्त्तव्यपरायणता और निष्ठा से उन्होंने विद्या के क्षेत्र में जो महान कार्य किया है, वह नितान्त दुर्लभ है।

चतुर्वेदी जी का जन्म विक्रमीय संवत् १९५९ के श्रावण मास की शुक्ल द्वितीया मंगलवार को इलाहाबाद जिले की करछना तहसील में बारा परगना के लालापुर नामक ग्राम में हुआ था। इनके पिता पण्डित लक्ष्मीनारायण चतुर्वेदी अपने युग में प्रयाग के प्रख्यात कर्मकाण्डी विद्वानों में से थे और संस्कृत के अच्छे पण्डित थे। चतुर्वेदी जी सरयूपारीण ब्राह्मण हैं। नयपुरा के चतुर्वेदी वंश में इनका सांकृत्य गोत्र है। जिस युग में चतुर्वेदी जी पैदा हुए थे और जिस वातावरण में उनका बाल्य जीवन बीता था; वह संस्कृत भाषा से अधिक प्रभावित था और आजकल की भांति अंग्रेजीमय नहीं था। उनके पिता स्वयं संस्कृत के बड़े विद्वान् और कर्मकाण्डी पण्डित थें, अतः अजिन-मेखला-दण्डधारी नितान्त बटु वेश में इनके विद्याव्ययन का श्रीगणेश प्रयाग के सुप्रसिद्ध संस्कृत विद्यालय धर्मज्ञानोपदेश पाठशाला अहियापुर (वर्तमान मालवीय नगर) में हुआ। यहीं से इन्होंने प्रथमा, मध्यमा तथा शास्त्री द्वितीय खण्ड की परीक्षाएँ व्याकरण विषय से उत्तीर्ण कीं; किन्तु शास्त्री तृतीय खण्ड की परीक्षा के समय वाराणसी में परीक्षा केन्द्र के सम्मुख जो दृश्य इन्होंने देखा, उसके कारण परीक्षा में बैठने से विरत रहे। यह सन् १९२१ ई० के असहयोग आन्दोलन का समय था। इस वर्ष इन्होंने कोई परीक्षा नहीं दी। सन् १९१४ से सन् १९२९ तक निरन्तर पन्द्रह वर्षों में वही एक वर्ष ऐसा था, जिसमें इन्होंने कोई परीक्षा उत्तीर्ण नहीं की। इसके बाद वे बनारस के हिन्दू विश्वविद्यालय के संस्कृत महा-विद्यालय में प्रविष्ट हुए; किन्तु वहाँ थोड़े ही समय रह सके, क्योंकि प्रवास में छात्र-जीवन की अनेक असुविधाएँ तो थीं ही, स्वास्थ्य भी अनुकूल नहीं रहता था; फलतः वे वाराणसी से पुनः प्रयाग वापस आ गए और अपनी संस्कृत की परीक्षाएं पुनः देने लगे।

प्रयाग आकर चतुर्वेदी जी ने संस्कृत अध्ययन के साथ-साथ यहाँ के डी० ए० वी० हाई-स्कूल में अंग्रेजी पढ़ना प्रारम्भ किया। यहीं से उनके छात्र-जीवन में एक क्रान्तिकारी परिवर्तन हुआ। अपनी अम्लान प्रतिभा और परिश्रमशीलता के बल पर संस्कृत और अंग्रेजी दोनों ही क्षेत्रों में उन्हें आशातीत सफलताएँ प्राप्त हुईं। सन् १९२३ ई० में जब उनकी अवस्था लगभग २१ वर्ष की थी और वे व्याकरण की शास्त्री परीक्षा उत्तीर्ण कर आचार्य परीक्षा के प्रथम वर्ष में बैठ रहे थे, उन्होंने उत्तर प्रदेश की हाई स्कूल परीक्षा में भी प्रवेश प्राप्त किया और प्रयाग मण्डल के सम्पूर्ण परीक्षार्थियों में सर्वप्रथम आए। सन् १९२५ ई० में वाराणसी की व्याकरणाचार्य परीक्षा उन्होंने तत्कालीन श्रेणी विभाजन के अनुसार उपाध्यायवर्ग में नहीं, अपितु तारांकित आचार्यवर्ग में सम्मानपूर्वक उत्तीर्ण की। सन् १९२६ की काव्यतीर्थ परीक्षा में बंगाली तथा गैर-बंगाली समस्त छात्रों में उनका द्वितीय स्थान रहा। सन् १९२९ ई० में प्रयाग विश्वविद्यालय की एम० ए० (संस्कृत) परीक्षा में वे सर्वप्रथम आए। उनका चित्र तत्कालीन सर्वविश्रुत अंग्रेजी दैनिक पत्र पायोनियर में निम्नलिखित प्रशस्ति के साथ प्रकाशित हुआ :

'इन्होंने प्रयाग विश्वविद्यालय की एम० ए० (संस्कृत) की प्रीवियस तथा फाइनल (दोनों) परीक्षाओं में प्रथम बार प्रथम श्रेणी प्राप्त की है। प्रयाग विश्वविद्यालय के अद्यावधि इतिहास में किसी भी छात्र ने यह विशिष्टता नहीं प्राप्त की।'

एम० ए० और व्याकरणाचार्य परीक्षाएँ उत्तम श्रेणी में उत्तीर्ण कर चतुर्वेदी जी यथा समय प्रयाग विश्वविद्यालय में ही अथवा उत्तर प्रदेश के अन्यान्य राजकीय शिक्षा सेवाओं में उच्च पद प्राप्त कर सकते थे। किन्तु उनके नितांत संकोची और अमहत्वाकांक्षी स्वभाव के कारण उन्हें उत्तर प्रदेश से बाहर मध्यप्रदेश शिक्षा-विभाग में अध्यापन कार्य सँभालना पड़ा। उनकी नियुक्ति तत्कालीन मध्यप्रदेश के एकमात्र राजकीय स्नातकोत्तर महाविद्यालय मॉरिस कॉलेज, नागपुर में हुई। यह सन् १९२९ का वर्ष था। मध्यप्रदेश में चतुर्वेदी जी निरंतर प्रायः ३० वर्षों तक क्रमशः प्रवक्ता (लेक्चरर), प्रोफेसर और प्रिंसिपल के पद पर समासीन रहे और सन् १९५८ ई० में पद-निवृत हुए। समूचे मध्यप्रदेश में विशेषतया शिक्षा-विभाग में उनके प्रगाढ़ पाण्डित्य और अध्यापन की बड़ी धाक थी। उनके छात्र और सहयोगी सब के मन में उनके प्रति अपार श्रद्धा और आदर के भाव थे। उनके प्रिय छात्रों में से प्रान्तीय एवं केन्द्रीय प्रशासन में अनेक आई० सी० एस० और आई० ए० एस० के उच्च पदाधिकारी विद्यमान हैं।

सन् १९५५ ई० में बनारस संस्कृत कॉलेज (वाराणसेय संस्कृत विश्वविद्यालय का पूर्व रूप) के प्राचार्य (प्रिंसिपल) पद के लिए चतुर्वेदी जी चुने गये थे, किन्तु मध्यप्रदेश के तत्कालीन मुख्यमंत्री पं० रविशंकर शुक्ल जी के अनुरोध पर उन्हीं की प्रेरणा से नव-संस्थापित राजकीय संस्कृत महाविद्यालय, रायपुर—-जो छत्तीसगढ़ के समृद्धतम दूधाधारी मठ के दान से प्रारम्भ किया गया था—-का प्रथम प्राचार्य पद चतुर्वेदी जी ने स्वीकार किया। तीन वर्ष तक वहाँ रह कर आपने अपने ढंग के एक अपूर्व संस्कृत संस्थान का संचालन किया; जो आज भी पाठ्यक्रम, छात्रवृत्ति, प्राध्यापक वेतन, प्रतिष्ठापद, विशाल भवन, ग्रन्थागार आदि की दृष्टि से स्पृहणीय और आदर्श है। इसी प्रकार नागपुर और सागर विश्वविद्यालय में संस्कृत-विभाग और ओरिएंटल फैकल्टी के अध्यक्ष तथा मध्यप्रदेश में राजकीय संस्कृत महाविद्यालय के संस्थापक प्राचार्य के रूप में संस्कृत के उन्नयन में चतुर्वेदी जी ने विशिष्ट कार्य किया।

मध्यप्रदेश के शिक्षा-विभाग से पद-निवृत्त होने के अनन्तर चतुर्वेदी जी कुछ दिनों के लिए भी कार्यविरत नहीं रह सके। अखिल भारतीय संस्कृतज्ञों की छानबीन करके केन्द्रीय शासन आयोग ने चतुर्वेदी जी को केन्द्रीय शिक्षा मंत्रालय में संस्कृत का विशेषाधिकारी नियुक्त किया, जहाँ वह सन् १९५९-६० में रहे। अपने कार्यकाल में चतुर्वेदी जी ने केन्द्रीय शिक्षा मंत्रालय की संस्कृत शाखा द्वारा जो उत्तमोत्तम कार्य और योजनाएँ आरम्भ कराईं, उनके कारण शासन को बहुत सुयश मिला और वह आज भी इन्हीं परम्पराओं पर चल रहा है।

प्रयाग चतुर्वेदी जी की जन्मभूमि ही नहीं, उनकी पितृभूमि और विद्याभूमि थी। कदाचित मध्यप्रदेश शासन के शिक्षा-विभाग के सेवा-काल में उन्होंने यह सोचा था कि उन्हें अब प्रयाग नहीं लौटना है, क्योंकि उन्होंने नागपुर में अपना सुन्दर भवन 'सारस्वत' बनवा लिया था; किन्तु विधि का विधान कौन टाल सकता है। सन् १९६० ई० में ही वह प्रयाग विश्वविद्यालय में संस्कृत विभागाध्यक्ष पद पर सादर समाहृत कर अभिषिक्त किए गए। यह था उनके महनीय तप, साधना तथा सौभाग्य का सुफल, जो यथासमय अनायास ही उन्हें मिला।

प्रयाग विश्वविद्यालय में संस्कृत विभागाध्यक्ष पद पर चतुर्वेदी जी छः वर्ष तक रहे

(१९६१-१९६६ तक)। इस अवधि में उन्होंने अनेक महत्वपूर्ण कार्य किए। कई दर्जन शोध-निबन्धों का निर्देशन किया, अनेक भाषणमालाएँ आयोजित कीं, अनेकानेक सांस्कृतिक कार्यक्रमों का श्रीगणेश कराया और अपने सैकड़ों छात्रों तथा सहयोगियों का अपूर्व सहकार, सौमनस्य एवं समादर प्राप्त किया। चतुर्वेदी जी देश के अनेक विश्वविद्यालयों की संस्कृत शिक्षा समिति के सम्मानित सदस्य थे। शोधप्रबन्ध-परीक्षण, प्राध्यापक-नियुक्ति, पाठ्यक्रम-निर्माण प्रभृति की समितियों में आपका महत्वपूर्ण सहयोग रहता रहा है।

सन् १९६६ ई० में प्रयाग विश्वविद्यालय के संस्कृत विभागाध्यक्ष पद पर से ससम्मान पदनिवृत होने के अनन्तर चतुर्वेदी जी केन्द्रीय विश्वविद्यालय अनुदान आयोग द्वारा मानदेय सहित प्राध्यापक पद पर बुलाये गए। इस पद पर वह पाँच वर्षों तक (७१ ई०) रहे। और अब सक्रिय सेवा से पदमुक्त होकर अपने नवक्रीत सारस्वत भवन, २५ स्टैनली रोड, इलाहाबाद में बड़ी शान्ति और सुख का यशस्वी जीवन यापन कर रहे हैं। ७१ वर्ष की आयु में भी वह युवकोचित स्फूर्ति और गतिशीलता से युक्त हैं। आज वह प्रयाग के सांस्कृतिक जीवन में इतने घुल-मिल गए हैं कि कोई भी साहित्यिक सभा हो या समारोह, उनकी महनीय उपस्थिति से वह धन्य हो जाता है।

सुन्दर शरीर एवं स्वास्थ्य, उत्तम यश, उत्तम कुल, उत्तम चरित्र, पारंगत वैदुष्य तथा ऐहिक सुख-साधनों से समन्वित चतुर्वेदी जी स्वल्प परिवार और अपने स्वल्प सन्तोषी स्वभाव के कारण परम सुखी हैं। उनके एकमात्र अनुज, एकमात्र पुत्र तथा एकमात्र पुत्री हैं। अनुज पद्मानन्द चतुर्वेदी एम० ए०, साहित्याचार्य हैं, जो सेवानिवृत्त होकर साथ रहते हैं, पुत्र स्वतंत्र व्यवसाय और गृहस्थी का संचालन करते हैं, पुत्री देश के प्रख्यात अधिवक्ता पं० कन्हैयालाल मिश्र की ज्येष्ठ बधू हैं, जिसके पति हाईकोर्ट के सुप्रसिद्ध एडवोकेट हैं। इस प्रकार वह धर्मपत्नी, पुत्र-पुत्रवधू, पुत्री-जामाता, पौत्र-पौत्री, दौहित्र-दौहित्री से घिरे एवं आर्थिक दृष्टि से स्वतंत्र एक आप्तकाम पुरुष हैं।

ईश्वर से प्रार्थना है कि वह उन्हें इसी रूप में स्वस्थ और दीर्घायु करे।

—रामप्रताप त्रिपाठी, शास्त्री
सहायक मंत्री

हिन्दी साहित्य सम्मेलन
प्रयाग
२४।३।७३

# सचित्रं जीवनम्

एम० ए० परीक्षासमुत्तीर्णतावसरे
१९२९ ई०

नागपुर मॉरिसकालेजे
नवनियुक्तः प्राध्यापकः
१९३१ ई०

प्राचार्यपदारूढः
१९५५ ई०

लब्धक्षणः
१९७१ ई०

# सचित्र-परिवारः

जनकः
स्व० पं० लक्ष्मीनारायण चतुर्वेदी

आयुस्मान् पुत्रः
श्री सत्यदेव चतुर्वेदी

धर्मपत्नी
सौ० रामदुलारी चतुर्वेदी

आयुष्मती कन्या
सौ० उमा मिश्र

॥ श्रीः ॥

**शासकीय - दूधाधारी - श्रीवैष्णवसंस्कृतमहाविद्यालय-**

**प्राचार्यपदमलङ्कृतवतां सुगृहीतनामधेयानां**

## श्रीमतां सरस्वतीप्रसादचतुर्वेदिमहाभागानां

**भारतस्य केन्द्रीये शासने विशेषाधिकारितया**

**संस्कृत-सेवायै सादरमुपाहूतानां**

# प्रास्थानिकमभिनन्दनम्

* * *

हे संस्कृतेरभिसमेधयितः! प्रवीण! प्राज्ञेषु लोक-परलोक-विधानवित्सु।
अस्मासु सन्नपि भवानधुना विदूरे सत्यापयत्यतितरां निजमीशभावम् ॥१॥

आचारवान् श्रुतिपरो जननीतिवेत्ता मध्यप्रदेश - बुधमानस-राजहंसः।
एको बभूव रविशङ्कर-शुक्लनामा श्यामाकटाक्षमहितोऽस्ति भवान् द्वितीयः ॥२॥

तस्यापि वाञ्छति विधिर्विनियोगमन्यक्षेत्रे ततो भवति चित्तमधीरमेतत्।
श्रेयोऽभिलाषिभिरुदारधियां सपर्यैवैका यतो गतिरुदाह्रियते जगत्याम् ॥३॥

श्रीमन्! तथापि परितोषमिमे व्रजामः स्थानोन्नतौ वयमुदीक्ष्य निजात्मलाभम्।
गत्वापि देशमपरं न विवेकभाजो विस्मारयन्ति निजपूर्वभुवं मरालाः ॥४॥

मातः सरस्वति! दयस्व पुनः प्रसादं वेदैश्चतुर्भिरनपेतमुपानयस्व।
तं तादृशं कमपि येन तवैव रूपं स्यात् संस्कृतेति विदितं प्रतिसंस्कृतं नः ॥५॥

त्वं भारती मखभुजामसि भारतं च देशोऽयमस्ति मखपुण्यविधौ नदीष्णः।
मातः पुनस्तदिह दिव्यहविष्यभूमौ दिव्यं प्रसादमभिवर्षय कञ्चिदित्थम् ॥६॥

काले काले तदिह भवता स्वाङ्कुरे वर्षणीयं
कार्ये कार्ये मधुर-मनसा साह्यमस्मै प्रदेयम्।
सोऽयं स्नेहो भवतु भवतां प्रत्यहँ वर्धमानो
यस्मिन्नेते समरसतमाः शिक्षकाश्छात्रकाश्च ॥७॥

**तिथिः-पौष-कृष्णा-६**
**वि. सं. २०१६**
**(२१-१२-५९)**
**रायपुरम् (म० प्र०)**

वयमत्रभवतां सान्निध्यपरितोषिताः
**शा० दू० श्री वै० संस्कृत - महाविद्यालयीयाः**
**शिक्षकाश्छात्राश्च**

विविधविद्याविलासविलसितानां महामान्यानां प्राप्तसारस्वतप्रसादानां चरितार्थनाम्नामत्रभवतां श्रीमत्सरस्वतीप्रसादचतुर्वेदिना प्रयागविश्व-विद्यालयीयसंस्कृतविभागाध्यक्षपदतः निवृत्तिग्रहणावसरे सप्रश्रयं समर्प्यमाणम् अधिकरकञ्जं भृङ्गायतामिदम्

# अभिनन्दनपत्रम्

विद्यावदातचरित ! स्थिरकीर्त्तिमूर्त्ते ! !
हीना वयं विरहिता भवताऽद्य जाताः।
तस्मान्मनांसि सकलानि वियोगदुःखं
श्रीमन्निवृत्तिजनितं नितरां वहन्ति ॥१॥

अस्मिन्निवृत्तिसमये भवतस्सपर्यां
सम्भावनाञ्च भगवन्नभिनन्दनञ्च।
कर्तुं वयं समुदिता न च तत्र शक्ताः
सामग्र्यभावपरतैव परं निदानम् ॥२॥

तस्मात्कृपापरवशो निखिलास्त्रुटीर्नः
श्रीमन् ! क्षमस्व, हृदये न विधेह्यमर्षम्।
अस्मन्मनोव्रततिभावसुमानि यानि
स्वीकृत्य तान्यनुगृहाण यथाकथञ्चित् ॥३॥

श्रुतौ, साङ्ख्ये शास्त्रे, परमगहने पाणिनिमते
कवीनां दिव्यानां परमरमणीये च समये।
स्मृतीत्याख्ये शास्त्रे ह्यनुपमपुराणादिषु च यत्
प्रभुत्वं सम्प्राप्तं निखिलजनसम्भावितमदः ॥४॥

पटुत्वं व्याहारेष्वखिलव्यवहारेषु च सदा
प्रबन्धेष्वप्येतन्निखिलनिगमेष्वस्ति च पुनः।
तथा नीतौ प्रीतिर्विबुधजनसङ्गेऽपि च परा
स्वतः सिद्धं सर्वं, किमिह विदुषां दुष्करमहो ॥५॥

भवाँल्लब्ध्वा कीर्त्तिं परमसुखदां पण्डितपते !
समेषां शिष्याणां सकलममतां प्रीतिमधुराम्।
सहायानां योगं विविधकरणीयेष्वपि पुनः
शतायुर्लप्सीष्ट स्थिरविमलकीर्त्त्यादिलसितम् ॥६॥

इन्द्रो धर्मश्च सोमो वरुणवसुमरुत्सूर्यरुद्रादिदेवा
वाल्मीकिः कुम्भयोनिश्च्यवनभृगुवसिष्ठात्रिपाराशराद्याः।
शैलास्सर्वे समुद्रा वनसरिदवनिद्योदिशो व्योमसन्ध्ये
वेदा यज्ञाश्च लोका ऋतुतिथिदिवसाः स्वस्ति भूयो भवद्भ्यः ॥७॥

वयं स्मः

**प्रयागविश्वविद्यालयीयसंस्कृतपरिषदः पारिषदाः**

# संस्कृत-निबन्धावली

⊙

## व्याकरण



⊙

## साहित्य



●

# हिन्दी-निबन्धावली

⊙

## वेद



⊙

## व्याकरण



⊙

## साहित्य

⊙

## दर्शन



⊙

## विज्ञान



⊙

## इतिहास तथा शोध



⊙

## विविध

⊙

## संस्मरण



⊙

## समीक्षा

# अंग्रेजी-निबन्धावली

⊙

**Veda**



⊙

**Grammar**

⊙

**Philosophy**



⊙

**Literature**

**Raview**



⊙

**Language and Education**



⊙

**Reminiscences**



⊙

**Miscellaneous**



⊙

# संस्कृत-निबन्धावली

⊙

**व्याकरण**



⊙

**साहित्य**

# १. पूर्वत्रासिद्धम् (८।२।१) इति सूत्रार्थः

**शब्दार्थः**—(सूत्रं) पूर्वत्र (पूर्वसूत्रदृष्ट्या अर्थात् पूर्वसूत्रस्य प्रवृत्तिकाले) असिद्धम् (अवर्तमानमिव) मन्तव्यम्।

पाणिनि-प्रणीतो ग्रन्थः 'अष्टाध्यायी' नामकः। यतस्तत्र अष्टौ अध्यायाः सन्ति। अष्टानामध्यायानाम् समाहारः अष्टाध्यायी इति व्युत्पत्तिः। प्रत्येकस्य अध्यायस्य चत्वारः पादाः इति हेतोः द्वात्रिंशत्पादात्मकोऽयं ग्रन्थः। "पूर्वत्रासिद्धम्' इति सूत्रं सम्पूर्णाष्टाध्यायीं भागद्वये विभजते। तत्र प्रथमो भागः अस्मात् सूत्रात्पूर्वम्, द्वितीयस्तु अस्मात्सूत्रात्परम्। पूर्वस्मिन् भागे एकोनत्रिंशत् पादाः अर्थात् सप्त अध्यायाः सम्पूर्णा (अष्टाविंशतिः पादाः) अष्टमाध्यायस्य प्रथमः पादः च, इति साकल्येन एकोनत्रिंशत् पादाः। अतः तस्य भागस्य "सपादसप्ताध्यायी" इति संज्ञा। द्वितीयभागेऽवशिष्टा अन्तिमाः त्रयः पादाः इति इति हेतोः तस्य "त्रिपादी" इति संज्ञा। तदित्थं "पूर्वत्रासिद्धम्" इति सूत्रं (८।२।१) सम्पूर्णाष्टाध्यायीं भागद्वये (सपादसप्ताध्याय्यां त्रिपाद्यां च) विभजते।

**सूत्रार्थः**—पूर्वत्र (सपादसप्ताध्यायीं दृष्ट्वा) त्रिपादी असिद्धा अर्थात् अवर्तमानेव भवति। इदं तात्पर्यम् यत् सपादसप्ताध्यायीस्थ-सूत्रदृष्ट्या त्रिपादीस्थ-सूत्रम् असिद्धं भवति, शक्तिरहितं सञ्जायते। यदि सपादसप्ताध्यायीस्थसूत्रं त्रिपादीस्थ सूत्रं च एक काले एव प्रवृतिमर्हतः तदा त्रिपादीस्थसूत्रमसिद्धं भवति, न प्रवर्तते इत्यर्थः। एवमेव त्रिपादीस्थसूत्रे प्रवृत्ते सति यदि सपादसप्ताध्यायीस्थ-सूत्रं प्रवृत्तिमर्हति तदा त्रिपादीस्थ-सूत्रमसिद्धं भवति। अर्थात् तत्कृतकार्यमवर्तमानमिव भवति। इदं द्विप्रकारमसिद्धत्वं क्रमशः समकालासिद्धत्वं जातासिद्धत्वं च इति संज्ञाद्वयेनाभिधीयते। तत्र समकालासिद्धत्वस्योदाहरम्—मनोरथ इति। अत्र मनस् रथ इति स्थिते "सकारस्य" ससजुषो रुः" इति सूत्रेण रुत्वे कृते मनर् रथ इति दशायां "रोरि" (८।३।१४) इति त्रिपादीस्थ-सूत्रस्य, "हशि च" (६।१।११४) इति सपादसप्ताध्यायीस्थ-सूत्रस्य च समकालमेव प्राप्तिर्भवति। तदा "पूर्वत्रासिद्धम्" इति सूत्रेण "रोरि" इति त्रिपादीस्थ-सूत्रमसिद्धं क्रियते इति हेतोस्तन्न प्रवर्तते , किन्तु "हशिच" इति सपादसप्ताध्यायीस्थ-सूत्रं प्रवर्तते। एवं च रकारस्योत्वे कृते (मन उ रथ इति स्थितिः) ततः "आद्गुणः" इति सूत्रेण अकारोकारयोः स्थाने एकादेशे गुणे (ओकारे) जाते "मनोरथ" इति रूपं सिद्धं भवति। द्वितीयस्य असिद्धत्वप्रकारस्य जातासिद्धत्वस्योदाहरणं 'हर इह'। अत्र "हरे+इह" इति दशायाम् एचोऽयवायावः इति सूत्रेण एकारस्य अयादेशे "हरय् इह" इति दशायां "लोपः शाकल्यस्य" (८।३।१६) इति सूत्रेण यकारस्य लोपे "हर इह" इति रूपं जायते। अस्यां दशायां "आद्गुणः" (६।१।८७)

इति सूत्रस्य अकारेकारयोः स्थाने एकादेश-गुणविधानाय प्राप्तिः सम्भाव्यते। परन्तु "आद्-गुणः" इत्यस्य सपादसप्ताध्यायीस्थत्वेन तत्सूत्रदृष्ट्या लोपविधायकं (लोपः शाकल्यस्य) इति त्रिपादीस्थं सूत्रमसिद्धम् भवति। अर्थात् तत्सूत्रकृतलोपकार्यमवर्तमानमिव भवति। एवं गुण-प्रवृत्तिकाले (हर+इह) इत्यत्र यकारलोपः असिद्धो भवति, अर्थात् यकारः पुनरागच्छति इति हेतोः गुणो न भवति। अकारेकारयोर्मध्ये यकारस्य वर्तमानत्वात्। इदमेव जातस्य (प्रवृत्तस्य सूत्रस्य) असिद्धत्वात् जातासिद्धत्वमित्युच्यते।

पूर्वत्रासिद्धमिति सूत्रं स्वस्थाने स्थितं (अष्टमाध्यायस्य द्वितीयपादस्य प्रथमसूत्रं सत्) पूर्वोक्तं कार्यं सम्पादयति। परन्तु इदं सूत्रम् यदि अधिकारसूत्रमिति मन्यते, अर्थात् एत-स्मात्सूत्रात् परेषु सूत्रेषु अस्याधिकारो भवेत् अर्थात् एतत् सूत्रमनुवृत्तिं लब्ध्वा तेषु परेषु सूत्रेषु गच्छेत्, तदा अष्टमाध्यायस्य द्वितीयपादादारभ्य अवशिष्टेषु सर्वसूत्रेषु 'पूर्वत्रासिद्धम्' इति सूत्रं गच्छति। तदा त्रिपादीस्थं प्रत्येकं सूत्रं पूर्वसूत्रापेक्षया पूर्वसूत्रं प्रति असिद्धं भवति। पूर्वत्र-असिद्धम् इति सूत्रस्य "अधिकार"—सूत्रत्वेन स्वीकारादिदं निष्पन्नं भवति। एवं च त्रिपादीस्थं प्रत्येकं सूत्रं सपादसप्ताध्यायीस्थसूत्राणि त्रिपादीस्थपूर्वसूत्राणि च दृष्ट्वा असिद्धं भवति। अर्थात् असिद्धत्वं न केवलं सपादसप्ताध्यायीस्थ-सूत्रदृष्ट्या किन्तु पूर्वगत-त्रिपादीस्थसूत्रदृष्ट्यापि भवति। अतएव किमु उक्तम् इत्यत्र "मय उञो वो वा" (८।३।३३) इति सूत्रेण पूर्वस्य उकारस्य वकारे कृते "किम्वुक्तं" इत्यत्र" मोऽनुस्वारः" (८।३।२३) इति सूत्रेण मकारस्यानुस्वारो न भवति। "मोऽनुस्वारः" इति त्रिपादीस्थ-पूर्वसूत्रदृष्ट्या "मय उञो वो वा" इति त्रिपादीस्थ-परसूत्रस्य जातसिद्धत्वात्। "पूर्वत्रासिद्धम्" इति सूत्रस्यायं विशदार्थः।

सपादसप्ताध्यायीस्थ-सूत्रं प्रति त्रिपादीस्थ-सूत्रम् असिद्धम्, किं च त्रिपाद्यामपि पूर्व-सूत्रं प्रति परसूत्रमसिद्धम्। एतेन स्पष्टं भवति यत् त्रिपादीस्थ-सूत्रमेव स्वपूर्व-सूत्रं प्रति असिद्धम् भवति। सपादसप्ताध्यायीस्थ-सूत्राणां तु परस्परम् असिद्धत्वं न भवति।

अष्टमाध्यायस्य द्वितीयपादस्य प्रारम्भे 'पूर्वत्रासिद्धम्' इति सूत्रस्योपन्यासेन कियत्कार्यं पाणिनिना सम्पादितम् इतीदानीम् ज्ञातुं शक्यते। सिद्धसूत्राणि सपादसप्ताध्याय्याम्, त्रिपाद्यां तु असिद्ध सूत्राणि स्थापितानीति प्रशंसनीयस्तस्य बुद्धिमहिमा। एवं च यत् विवृताकारं संवृताकारं विदधाति तत् अष्टाध्यायीस्थमन्तिमं सूत्रम् "अ अ" इति सर्वाणि सूत्राणि प्रत्यसिद्धं मन्यते। अतएव सर्व-सूत्र-प्रवृत्तिकाले संवृतोऽप्यकारो विवृत इव भवति। अतः उच्यते "ह्रस्वस्याकारस्य प्रयोगे संवृतत्वम्, प्रक्रियादशायां तु विवृतत्वमेव" अर्थात् संवृतोऽपि ह्रस्वाकारः व्याकरणसूत्रप्रवृत्तिकाले विवृतो मन्यते। अन्यथा धनागम इत्यत्र धनेतिनकारस्थ-ह्रस्वाकारस्य आगम इति शब्दस्थदीर्घाकारेण सह "अकः सवर्णे दीर्घः" इति सूत्रेण दीर्घाकाररूपः एकादेशः न स्यात्। ह्रस्वाकारस्य संवृतत्वेन तथा दीर्घाकारस्य विवृतत्वेन 'संवृत-विवृतेति' प्रयत्न-भेदे जाते तयोः सवर्णत्वाभावात् "अकः सवर्णे दीर्घः" इति सूत्रं न प्रवर्तेत। 'अ अ' इति अन्तिमसूत्रस्य सकलाष्टाध्यायीस्थ-सूत्राणि प्रति असिद्धत्वे तु संवृतस्यापि ह्रस्वाकारस्य विवृतत्वं सुलभं भवति।

इत्थं 'पूर्वत्रासिद्धम्' इति सूत्रं पाणिनीय-व्याकरण महोपयोगि। एतेन पाणिनीयसूत्राणां परस्परं बलाबलत्वं निश्चीयते। समकालमेव प्राप्तयोः सूत्रयोर्मध्ये केन सूत्रेण प्रवर्तितव्यम्

इति ज्ञानाय; तथा सिद्धे पदे प्राप्तस्यान्यसूत्रस्य प्रवृत्ति-निवारणाय चास्य सूत्रस्योपयोगः। एव-मेव ह्रस्वाकारस्य दीर्घाकारेण सवर्णत्व-स्थापनायापि अस्य सूत्रस्योपयोगः। पाणिनिना अष्टाध्याय्यां यः सूत्राणां क्रमो निर्धारितः स पदसाधनोपयोगी सहेतुकश्च, न तु यदृच्छया कृतः इति पाणिनीयशास्त्र-वैशिष्ट्यं प्रदर्श्यतेऽनेन सूत्रेण ॥

[गुरुवर्य सक्सेना—महोदयानामादेशेन पाणिनिसूत्राणां सरलरीत्या बालछात्रोपयोगिनी व्याख्या कथं कर्तव्येति प्रदर्शनार्थं १९४९ मिते ईशवीये वर्षे लिखितम्]

# २. "अकृतव्यूहाः पाणिनीयाः"—इति परिभाषा-विमर्शः

सूत्राणि स्वप्रवृत्तियोग्यस्थले कदापि व्यभिचारं न क्षमन्ते। अतएव दुर्दमरिपुतुल्यानीति विदुषामुक्तिः। स्वप्रवृत्तये आवश्यकानां समेषां समयानामुपस्थितौ तेषां प्रवृत्तिरनुपेक्षणीया। प्रवृत्तियोग्यस्थलेऽपि तेषामप्रवृत्तेस्त्रय एव अवसराः सन्ति। प्रथमः तावत्, बाधकसूत्रेण बाधः, द्वितीयः तावत्, निषेधकसूत्रेण निषेधः। तृतीयस्तावत्, वैकल्पिकसूत्रस्य पक्षान्तरेऽप्रवृत्तिरिति। तत्र तृतीयावसरे अप्रवृत्यपेक्षया प्रवृत्तिः श्रेयसीति पदसाधुत्वकाराणां मतम्। सूत्रप्रवृत्तेः किमपि दृष्टं फलं भवेदित्यत्रापि नाग्रहः। प्रवृत्तियोग्यस्थले फलाभिसन्धिरहितापि प्रवृतिः लक्ष्यते। अतएव पतञ्जलिना 'पर्जन्यवल्लक्षणप्रवृत्तिरिति उक्तम्। अर्थात् यथा शुष्क प्रदेशे जलपूर्णप्रदेशे च उभयत्रादि पर्जन्यो वर्षति, एवमेव पदस्वरूपे दृष्टं फलं भवेत् न वा प्रवृत्तियोग्यस्थले सूत्रं प्रवर्तते एव।

सत्यामेवं स्थितौ प्रवृत्तियोग्यस्थलेऽपि पाणिनीयसूत्रं न प्रवर्ततेइति विस्मयावहां वार्ता। परन्तु विस्मयकार्यपि इदं वचनं सत्यमेव। आत्मनो निमित्तस्य भाविनं विनाशं दृष्ट्वा सूत्रं प्रथमत एव न प्रवर्तते इत्यर्थिका 'अकृतव्यूहाः पाणिनीयाः' इति परिभाषा वर्तते।

न खल्वेषा परिभाषा पतञ्जलिना साक्षात्पठिता, नापि ज्ञायते 'व्यूह' पदस्य निश्चितोऽर्थः। अतः एतत्परिभाषायां अभिमतार्थविचारे विमर्शः प्रतन्यते। न कृतो व्यूहः (भाविनिमित्तविनाशे सूत्रप्रवृत्तिविषयक आग्रहो) यैरिति भट्टोजी दीक्षितानुसारमस्याः परिभाषाया अर्थः। उदाहरणं तु सेदुष इति। 'सद्' धातोः क्वसुप्रत्यये निष्पन्नस्य 'सेदिवस्' इत्यस्यद्वितीयाया बहुवचने इदं रूपम्। तत्र प्रथमाविभक्तिस्थलेइव वलादिलक्षण इडागमो न दृश्यते। इडागमस्य निमित्तं वलादित्वं, द्वितीयाविभक्तिबहुवचनशस्प्रत्यये सभागते 'वसोः संप्रसारणम्' इति सूत्रेण वसुप्रत्ययस्थ—वकारस्य संप्रसारणे कृते, नाशमेष्यतीति कृत्वा प्रथमत एव इडागमो न प्रवर्त्तते। अतएव सेदुष इति रूपम्, इडागमे कृते तु सेद्युष इति अनिष्टरूपापत्तिः। भाविनि निमित्तविनाशे पूर्वत एव तन्निमित्त प्रयुक्तं कार्यं न प्रवर्तते। लोकन्यायसिद्धश्चायमर्थः। 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इत्याभाणकममुमेवार्थमभिधत्ते। कैयटस्तु अस्याः परिभाषायां भिन्नायेव व्याख्यां करोति। तन्मते पूर्वप्रवृत्तमपि सूत्रं स्वनिमित्तविनाशं निरीक्ष्य निवर्तते इत्यस्याः परिभाषाया अर्थः। तन्मते 'व्यूहः' इत्यस्य कारणनाशे कार्यस्थितिरूपो विशिष्टस्तर्कः इत्यर्थः। तथा च निमित्तापाये नैमित्तिकस्याप्यपाय इति निष्कृष्टोऽर्थः। वलादिनिमित्तको जातोऽपि इडागमः शस्प्रत्यये आगते, प्रवृत्ते च सम्प्रसारणे स्वनिमित्तस्य वला-

दित्वस्य नाशं निरीक्ष्य निवर्तते, कारणनाशे कार्यनाशवत्। भट्टोजीदीक्षितमते इडागम सूत्रं प्रथमतं एव न प्रवर्तते, कैयटमते प्रवृत्तमपि सूत्रं पश्चात् निवर्तते। एवंप्रकारेण समानायामपि सेदुष इत्यादिप्रयोगसिद्धौ दृष्टिकोणभेदः स्पष्ट एव। एको दूरदर्शितया भाविनिमित्तविनाशस्थले सूत्र प्रवृत्तिमेव नानुमन्यते, अपरस्तु निमित्तविनाशे जाते पूर्वं प्रवृत्तमपि सूत्रं अप्रवृत्तमिव मनुते। फलभेदाभावात् एतन्मतद्वयमपि पदसाधुत्वविधाने स्वीकृतिमर्हति।

परन्तु नैतावता सकलकार्यनिर्वाहः। सन्त्यनेकान्युदाहरणानि, येषु उपर्युक्तनियम-स्योल्लङ्घनं दृश्यते। तद्यथा—स्त्रीप्रत्ययान्तपट्वीशब्दतृतीयैकवचने पट्वयेति रूपं लभ्यते। तत्र (पटु+ई+आ) स्त्रीप्रत्ययेकारनिमित्तकम् उकारस्थाने यणविधायकम् 'इकोयणची' ति सूत्रम्, ईकारस्य यणादेशनिमित्तस्यविनाशे सम्भावितेऽपि, प्रवर्तते, अथवा स्त्रीप्रत्ययेकारनिमित्तकं यणादेशकार्यं, निमित्तस्येकारस्य द्वितीय यणादेशेन विनाशे जातेऽपि न निवर्तते। एवमेव सूत्थितस्थापत्यं सौत्थितिरित्यत्र आदिवृद्धया दीर्घनिमित्तस्य सवर्णाकारस्य भविनिविनाशेऽपि सु+उ इत्यनयोः सवर्णदीर्घो भवत्येव। तथा ण्यन्तात् भूधातोर्निष्ठायां क्तप्रत्यये इडागमे णिलोपे जातेऽपि तन्निमित्तको धातुवृद्धिर्न निवर्तते। स्थूलेक्षिकयोपलभ्यमानान् एतादृशानपवादान्मनसि-कृत्य परम्परागतवैयाकरणसम्प्रदायैरस्याः परिभाषाया अनित्यतोद्घोषिता। परन्तु सूक्ष्मेक्षिकया उक्तपरिभाषाया यथार्थार्थनिरीक्षणे 'पटव्या, सौत्थितिः इत्यादि प्रयोगा नापवादकोटिं भजन्ते इति मे मतम्। परिभाषायाः प्रवृत्तिः कीदृशेषु स्थलेषु जायते इत्यस्य निर्णयेन सम्भा-वितदोषनिराकरणं कर्तुं शक्यते। धातुसाधितापरपर्यायकृदन्तशब्दानां सुब्विभक्त्यन्तरूपेपद रचनायामस्याः परिभाषाया उपयोगः। तत्र सुब्विभक्तिमाश्रित्य कृतेनादेशादिरूपकार्येण यदि तन्निमित्तनाशः सम्भाव्यते, यन्निमित्तकृतं कार्यं कृदन्तशब्दरचनाकाले भवति, तर्हि कृदन्त शब्दरचनाकालीनं कार्यं प्रथमत एव न प्रवर्तते अथवा प्रवृत्तमपि निवर्तते। एतदर्थस्वीकारेण पट्व्येत्यत्रं न दोषः, यतोऽत्र पट्वीति स्त्रीप्रत्ययरूपतद्धितान्तमङ्गम्, न कृदन्तरूपाङ्गम्। सौत्थितिरित्यत्रापि न कृदन्तरूपाङ्गम्, नापि सुब्विभक्तिमाश्रित्य तत्रादिवृद्धिः, किन्तु इञ्प्रत्ययतद्धितीयम्। एवमेव भावित इत्यत्र जातो· णिलोपो न विभक्तिमाश्रित्य प्रवर्तते, किन्तु निमित्तकः निष्ठाकृदन्तीयम्। यत्र प्राथमिकरूपनिर्माणे कृदन्तशब्दरचनायां कृतंमादेशादि कार्यं, भाविकाले सुब्विभक्तिमाश्रित्य करिष्यमाणेन कार्येण लुप्तनिमित्तकं भवति, तत्रैव इयं परिभाषा प्रवर्तते इति मथितार्थः। युक्तंचैतत् यतः सर्वथेदंकार्यकारण विमर्शकोटिमारोहति। किं तत् कारणम्? तदित्थम्। "अपदं न प्रयुंजीते" तिनियमानुसारं लोकव्यवहारे इव शास्त्रेऽपि केवलकृदन्तरूपाङ्गस्य स्वतंत्रस्थितिः न समुचितेति कृत्वा तद्-विभक्तिमपेक्षते। अतएव विभक्तिमाश्रित्य क्रियमाणस्यादेशादि कार्यस्य कृदन्तरूपाङ्गोपरि प्रभावः स्वाभाविक एव। तद्धितरूपाङ्गोपरि तु प्रभावो न तथा स्वाभाविकः, तस्य द्वैतीयिक रूपत्वात्, तद्धितप्रत्ययोत्पत्तेः पूर्वमपि स्वतंत्रस्थितिसम्भवात्। किं च अनुपेक्षणीयविभक्ति-माश्रित्य क्रियमाणमेव कार्यमत्र निमित्तविनाशसाधतत्वेनाभिप्रेतं, नतु कृत्तद्धितादिप्रत्यय-माश्रित्य क्रियमाणं कार्यम्।

उपर्युक्तविशिष्टार्थस्वीकारे तत्कार्यकारणपर्यालोचने च कृते अस्याः परिभाषाया

कैयटभट्टोजीदीक्षितसम्मतम् अनित्यत्वमनाश्रयणीयं भवति। अपवादवत्परिलक्ष्यमाणानामुदाहरणानां सर्वथोपपत्तिश्च सुशका भवति। "व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्" इति भाष्योक्त्यनुसारं विशिष्टव्याख्यानं वैयाकरणानां शरणमितिमत्वा तस्यैवात्रस्वीकारः।

नागेशभट्टेन पदावधिकसंस्कारपक्षं स्वीकृत्य सेदुष इत्यत्र दोषो निवारितः। तदपि मतं सर्वथा कार्यकारणविमर्शकोटिमारोहति। तस्मिन् पक्षे सम्पूर्णपदस्थ एककालमेव रचना क्रियते। कृदन्तमङ्गं निर्माय विभक्तिर्नानीयते, किन्तु कृदन्ताङ्गरचना--समकालमेव अपेक्षित विभक्तिरपि संयोज्यते। एवं च सद्+वस्+शस् इत्येवं स्थिते तत्तत्कार्याणि प्रवर्तन्ते। तत्र शस्निमित्तकस्य संप्रसारणस्य विशिष्टकार्यत्वात् पूर्वं प्रवृत्तौ वलादित्वाभावात् इडागमः सम्भाव्यते एव नेति सर्वमनामयम्। प्रयोगकाले विभक्त्यन्तं पदमेव झटिति नेत्रपथं समागच्छति, न तु पूर्वं कृदन्तरूपाङ्गम् स्मर्यते, ततः अपेक्षितविभक्तिः आगच्छति। अङ्गावधिकसंस्कार पक्षापेक्षया पदावधिकसंस्कारपक्षः समीचीनतरः। केवलाङ्गस्थ प्रयोगाभावेन अपेक्षितविभक्तेः अङ्गरचनाकाले स्थितेः सर्वथावश्यकत्वात्।

पदावधिकसंस्कारपक्षवत् वाक्यावधिकसंस्कारपक्षोऽपि अवाञ्छनीयसन्धि-निवृत्तये समाश्रयणीयः। तदित्थम्। स्वतंत्रपदानां स्वातंत्र्येण पृथक् पृथग्रचनास्वीकारे हरिः गच्छतीत्यादिवाक्ये परिलक्ष्यमाणा विसर्गरूपसन्धिः गतेपतिता स्यात्। वाक्यावधिकसंस्कारपक्षाश्रयणे तु हरि+सु+गम्+ति इत्येवं स्थिते विरामाभावात् रेफस्य न विसर्गः इति हरिर्गच्छतीति वाक्यं निष्पद्यते, नतु हरिः गच्छतीति। द्वितीयविधवाक्यस्य पदावधिकसंस्कारपक्षे एव साधुत्वं, नतु वाक्यसंस्कार पक्षे। कुत्र कः पक्षः समाश्रयणीय इति प्रश्ने समागते इदमेवोत्तररूपेण वक्तुं शक्यते यत् गद्यवाक्ये पदसंस्कारपक्षाश्रयेणास्य सम्भाव्यमानत्वेऽपि, पद्यवाक्ये वाक्यसंस्कार पक्ष एव समाश्रयणीयः। अतएव पद्ये प्रत्येकपादस्य पूर्वार्धोत्तरार्धयोरन्यतरस्य वा मध्ये सन्धिनियमानां पालनमावश्यकमेव। एवं च पूर्वपादान्त्याक्षररूप मुत्तरपादाद्याक्षरं निरीक्ष्य निर्धारणीयं, न ततः पूर्वम्। अन्यथा दुष्टसन्धिप्रसङ्गः स्यात्। ततश्चागामिनाक्षरेण वर्तमानाक्षरस्य रूप परिवर्तने संभाविते प्रथमत एव वर्तमानाक्षररूपभागाम्यक्षरानुसारं विधेयमिति वाक्यसन्धि-विषयेऽस्याः परिभाषायाः समीचीन उपयोगः। भवेन्नाम स एवाभिमतोऽर्थः अस्याः परिभाषायाः इति शम्।

# ३. व्याकरणशास्त्रस्येतिहासः

## महत्त्वम्

अतिप्राचीनकालादारभ्य व्याकरणशास्त्रस्य महत्त्वं भारतीयवाङ्मये सुविदितम्। एतच्छास्त्रस्य भारतीय-विद्वद्भिः कृतोऽतिसूक्ष्मेक्षिकया ऊहापोहपूर्वको विमर्शो विश्वस्य अन्यदेशेष्वदृष्टचरः। यूरोपदेशे भाषा-विज्ञानशास्त्रं नितरामाधुनिकम्। संस्कृत-भाषा-परिचय-मुपजीव्यैव यूरोपदेशे भाषाविज्ञानशास्त्रं प्रावर्तत, विकासं चालभत। अस्माकं भारते देशे तु शास्त्रस्यास्य विशिष्टः परिचयो वैदिकयुग एव समपद्यत। निखिलभारतीयविज्ञाननिधेर्वेदस्य षट्सु प्रधानाङ्गेषु व्याकरणं प्रधानं गण्यते। उक्तमेव शिक्षायां–"मुखं व्याकरणं स्मृत" मिति। यथा देवदत्तशब्दे समुच्चारिते हस्तपादाद्यङ्गैः सहितोऽङ्गी देवदत्तः स्मृतिपथमारोहति, देव-दत्तपरिचये च क्रियमाणे केवलं तन्मुखमेव प्राधान्येनावलोक्यते, तथैव वेदशब्दादपि शिक्षा-कल्पाद्यङ्गसहितस्य वेदराशेर्बोधः सञ्जायते। एवं वेदपरिचयार्थं तन्मुखभूतस्य व्याकरणस्य सम्यग् ज्ञानमपेक्षितं भवति। उक्तञ्च पतञ्जलिना––

"पुरा संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते। तेभ्यस्तत्तत्स्थानकरणनादानु-प्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते"। अर्थात् व्याकरणाध्ययनानन्तरं वेदाध्ययनमुपपद्यते। "स्वाध्यायोऽध्येतव्य" इति श्रुतिवाक्येन वेदाध्ययनवत् तदङ्गाध्ययनमपि विधिचो-दितमिति बुधैर्मन्यते। "ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति आगमवाक्ये-नाऽपि तदेव प्रतिपाद्यते। वेदाङ्गेषु व्याकरणस्य प्राधान्यविषये गमकान्तरमपि विद्यते। वेदाङ्गेषु शिक्षायाः निरुक्तस्य च समावेशः। शिक्षा-निरुक्ते च भाषाशास्त्रापरपर्यायेण व्याकरणशास्त्रेण साक्षात् सम्बद्धे-इति सर्वसम्मतमेव।

एवञ्च कल्पच्छन्दोज्यौतिषानि विहायावशिष्टं वेदाङ्गत्रयं व्याकरणशास्त्रान्तर्भूत-मिति व्याकरणस्य प्राधान्यं सुतरामुपपद्यते।

## प्राचीनता

व्याकरणशास्त्रस्य सर्वप्रथमः प्रवर्त्तको देवराज इन्द्रः। स च भाषां व्याकृतामकरोत्' इत्यर्थकः स्पष्टोल्लेखस्तैत्तिरीयसंहितायामुपलभ्यते। यथा––

'चत्वारि शृंङगात्रयो अस्य पादाः द्वेशीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यानाविवेश॥

इत्यस्मिन् वैदिकमन्त्रे 'नामाख्यातोपर्गनिपाताः' इति चतुष्टयपदभेदस्य, कालत्रयस्य, विभक्तिसप्तकस्य च परीक्षेण निर्देशः। ब्राह्मणग्रन्थेषु भाषाशास्त्रमुख्याङ्गस्य निर्वचनस्य पदे पदे-उदाहरणानि दृश्यन्ते। मन्त्राणां पदपाठेऽपि अङ्गविभक्ति-विभागः, समासच्छेदः, सन्धिविच्छेदः-इत्येवंरूपो व्याकरणशास्त्रोपयोग उपलभ्यते।

वैदिक-वाङ्मये प्रातिशाख्यग्रन्थाः, अक्षरोच्चारणपरिवर्त्तनादिविषयनिरूपणे भाषाशास्त्रनियमाननुसरन्ति। एवमेव यास्काचार्यकृतो निरुक्तग्रन्थो व्याकरणशास्त्रप्रतिपाद्यविषयाद अबहिर्भूतः।

पौराणिक-वाङ्मयेऽपि व्याकरणशास्त्रस्य विशिष्टविषयाणां निरूपणं गोचरीक्रियते। पाणिनिकृताष्टाध्याय्यामुपदशानां पूर्ववैयाकरणानां नामग्राहमुल्लेखेनाऽपि व्याकरणशास्त्रस्य परमप्राचीनता सिध्यति।

## वैशिष्ट्यम्

पाणिनीयाष्टाध्यायी विश्ववाङ्मयेऽपूर्वो ग्रन्थः। अस्यां पूर्ववैयाकरणानां चिन्तनान्यनुशीलितानि, संस्कृतवाङ्मयीयानां शब्दानां व्याकरणं सूत्ररूपेणोपनिबद्धम्। ततोऽनु कात्यायन-पतञ्जल्यादय उत्तरकालीन-वैयाकरणा अप्रयुक्तानि नवप्रयुक्तानि च पदानि प्रथमं निरूप्य, पाणिनिसूत्रेष्वेव संशोधन-परिबर्द्धन-प्रत्याख्यानात्मक-पद्धतिमनुसृत्य व्याकरणशास्त्रं तथा सामर्थ्यसहितं कृतवन्तः; यथाद्यापि तस्य प्रामाण्यं सर्वथाऽक्षुण्णं वर्तते।

पाणिनि-कात्यायन-पतञ्जलीनां 'मुनित्रयी' ति संज्ञा। एतन्मुनित्रयी-प्रतिपादितं मतमाश्रित्यैवोत्तरकाले पाणिनीयव्याकरणस्येतर-व्याकरणानां वा सम्प्रदायास्तं विकासं विस्तारं च प्रापुः, यस्य कालः स्थूलदृष्ट्या विक्रमसंवत्सरगणनानुसारं गता द्विसहस्राब्दाः।

विगतद्विसहस्रमितेषु वत्सरेषु भारतीय-वैयाकरणैर्यद् गहनं विमर्शितम् ऊहापोहपूर्वकं चिन्तनञ्च कृतं तत्सर्वं संस्कृतविद्याया मेरुदण्ड इत्याख्यां लब्धुमर्हति। अस्मिन्नूर्जस्वले व्याकरण-शास्त्रस्याध्ययने संस्कृतम्, प्राकृतम्, इत्युभयभाषयोस्तत्त्वविदां सुकृतिः सन्निहिताऽस्ति।

एतस्मिन्व्याकरणाध्ययनमहायागे भोजभर्तृहरीत्यादीनां विद्वन्नृपाणां, सम्राट्पुष्य-मित्रयाजकस्यं पतञ्जलेः, तन्तुवाय-वंशोद्भवस्य जुमरनन्दिनः, राजाश्रितस्य समृद्धस्य हेमचन्द्रस्य तथा तपःकृशस्य निर्धनस्य नागेशभट्टस्य—आकाश्मीरात् केरलान्तसमस्तभारतस्याद्यावधि प्रादुर्भूतानां विदुषामार्त्विज्यं दरीदृश्यते।

विक्रमादित्यकालात् पूर्वं संस्कृतवाङ्मयस्यं विविधानां शास्त्राणां प्रादुर्भाव-विकासौ जातौ, किन्तु तेषां सम्यक् परिशीलनं, परीक्षणं, परिपुष्टचिन्तनं, प्रमार्जनंच विक्रमकालादुत्तरमेव सम्पन्नम्। एतदेव गतद्विसहस्राब्द्याः विशिष्टतां निर्दिशति। दर्शनषट्कं, ज्योतिःशास्त्रमायु-र्वेदशास्त्रञ्च यथा सुसम्पन्नतामलभन्त; तथैव व्याकरणशास्त्रमपि अस्मिन्नेव युगे परां समृद्धि-मानोतं वैयाकरणैः।

वैयाकरणशास्त्रं परिष्कृतं सत्शास्त्रीयरूपं दधौ, यथा वेदमिदानी केवलं 'शब्दानुशासन' शास्त्रम्, अपितु शास्त्राणां शास्त्रमपि समपद्यत। अतएव व्याकरणशास्त्रस्य स्फोटवाद-शब्दविवर्तवाद-

शक्तिवादेत्यादयो वादाः, न्यायमीमांसाद्यन्यविचारशास्त्राणां प्रतिपाद्यविषयेषु परिगण्यन्ते। सर्वदर्शनसङ्ग्रहे विरचिते व्याकरणशास्त्रं दर्शनेष्वन्यतमत्वेन परिगणितम्। तस्य सैद्धान्तिकमतानां प्रतिपादनं स्वतन्त्ररूपेण कृतं विलोक्यते। शब्दसाधुत्वप्रतिपादनरूपात् स्वीयविषयाद्बहिरागत्य व्याकरणशास्त्रं तथा समुन्नतं स्वक्षेत्रप्रसारमलभत, यथाद्यापि भारतदेशे यावज्जीवं व्याकरणाध्ययनं कुर्वाणा बहुसंख्यका विद्वांसो दरीदृश्यन्ते।

"द्वादशभिवर्षैर्व्याकरणं स्माधीयते" इत्येवं विद्यापरम्परा भारतदेश एव समुपलभ्यते। नैतादृशो दीर्घकालीनः प्रयासो व्याकरणाध्ययनेऽन्यदेशेषु दृश्यते। समासतः इदमेव संस्कृतव्याकरणस्य नान्यत्रदृष्टं वैशिष्ट्यम्।

**[वाराणस्याः सुप्रभातनाम्नि मासिकपत्रे १४ वर्षस्य चतुर्थांके प्रकाशितः]**

# ४. वक्रोक्तिवादः

संस्कृतवाङ्मये साहित्यसमीक्षामभिलक्ष्य विपुलं चिन्तनं पर्यायलोचनं च दृश्यते। नाट्य-शास्त्रप्रजेतुः भरतमुनेरारभ्य पण्डितराजजगन्नाथपर्यन्तं, यस्मिन् विषये अनेके वादाः सिद्धान्ताश्च रस-रीति-गुण-अलंकार-ध्वनिवक्रोक्तिनाम्ना चर्चिताः खण्डन-मण्डनैश्च सुविवेचिताः, तेषां मध्ये वक्रोक्तिमाश्रित्य प्रस्तूयते अत्र विचारः।

उक्तिविशेषः काव्यम् इति विदग्धोक्तिः। एतेन स्पष्टं भवति यत् सर्वा उक्तयः काव्यसंज्ञामर्हन्ति किन्तु काश्चन शेषोक्तय एव। कोऽसौ विशेष इति प्रश्नविमर्शे इदं मनस्यवतरति यत् यत्र कोऽपि असाधारण प्रकारः (साधारण प्रकाराद् भिन्नः) बोद्धव्यार्थनिर्देशे समाश्रीयते तत्रैव काव्यसंज्ञार्हता स्वीकार्या न सर्वत्र। गतोऽस्तमर्कः इति वाक्येन यदि केवलं सूर्यास्तकालस्य सूचनैव अभिप्रेयते तदा तत्र न किमपि नावीन्यम्, अतएव काव्यत्वाभावः। परन्तु यदि वक्तृबोद्धव्यकालादि-प्रसंगविशेषे सूर्यास्तस्य निर्देशेन कश्चन पूर्वसङ्केतितः अर्थान्तरो निर्देष्टुमिष्यते, तर्हि तदेव वाक्यं काव्यकोटौ परिगण्यते। एवं च उक्तिविशेषः अर्थात् असाधारणप्रकारोक्तिः काव्यम् इति काव्यलक्षणं पर्यवस्यति। एष एव काव्यमार्गो वक्रोक्ति-सिद्धान्तनाम्ना अभिधीयते।

वक्रोक्तिः काव्यजीवितम् इत्युक्त्या वक्रोक्तेः काव्यप्राणत्वम् ईशवीयदशशताब्द्या अन्तिमे भागे लब्धजन्मना आचार्यकुन्तकेन प्रतिष्ठापितम् इतिविद्वत्समाजे प्रसिद्धमेव। किन्तु ततोऽपि पूर्वं सप्तमशताब्द्याम् आचार्यभामहेन अतिशयोक्त्यपरपर्यायस्य वक्रोक्तेः महत्त्वमाकलितमासीत्। अतिशयोक्तेः अलंकारत्ववत् वक्रोक्तेरपि अलंकारत्वं सूपपादमेव। "सैषा सर्वत्र वक्रोक्तिः अनयार्थो विभाव्यते। यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना" इति भामहोक्तिः सुप्रसिद्धैव। परन्तु आचार्यकुन्तकेन वक्रोक्तिः किमपि अपूर्वमेव विशिष्टस्थानं नीता। तस्य मते वक्रोक्तिः न केवलम् अन्यतमालंकारः, अपितु अलंकार्यस्य काव्यस्य जीवितम् प्राणाः इति प्रतिपाद्य अपूर्वएव मौलिकः साहित्यसमीक्षासिद्धान्त उद्भावितः। कुन्तकेन वैदग्ध्य-भङ्गीभणितिः इति शब्दैः वक्रोक्तिः वर्णिता। वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैव अभिधा। वैदग्ध्यं कविकौशलं, तस्य भङ्गी, विच्छित्तिः चमत्कारपूर्णः संनिवेशः। अर्थात् केनापि चमत्कारिणा प्रकारेण कविकौशलप्रदर्शकं कथनं वक्रोक्तिः। काव्यशास्त्रे विभिन्न-साम्प्रदायिकानां "रीतिरात्मा काव्यस्य, काव्यस्यात्मा ध्वनिः" इत्यादि डिण्डिमघोषामनुकुर्वन् आचार्य कुन्तकोपिवक्रोक्तिः काव्यजीवितम्इति स्वसिद्धान्तम् उच्चैरुद्घोषयाभास, प्रतिपादयामास च सविस्तरं स्वकीये वक्रोक्तिजीविताख्ये ग्रन्थे स्वाभिप्रेतं सुनैपुण्येन।

काव्यशरीरं किम् ? शब्द: अर्थ:, तदुभयं वा ? इति बहुचर्चितप्रश्नस्य समाधाने, विवक्षितार्थैकवाचक: शब्द:, सहृदयाह्लादकारिस्वस्पन्दसुन्दर: अर्थ: इति प्रतिपादयन् आचार्यकुन्तक: वाचकवाच्यापरपर्याययो: प्रसिद्ध "शब्दार्थ" पदयो: स्वशास्त्रे कमप्यपूर्वमेव परमार्थं स्वीकरोति। तथाविधौ शब्दार्थौ द्वावपि सम्मिलितौ काव्यमिति कुन्तकाभिप्रेतम्। उभावेतावलंकार्यौ तयो: पुनरलङ्कृतिरेव वक्रोक्ति: इति निर्गलितार्थ:। शब्द: खलु काव्यस्य सौभाग्यम्, अर्थस्तु काव्यस्य तारुण्यमिति सौभाग्यतारुण्याभ्यां सुशोभितं शरीरं यथा सहृदयाह्लादनाय भवति, तथैव काव्यमपि मर्मज्ञजनमनांस्यावर्जयति।

एवं वक्रोक्तिस्वरूपं सूक्ष्मेक्षिकया प्रतिपाद्य कविव्यापारे वक्रत्वस्य प्रकाराणां विषये तेषां प्रमुखान् भेदान् परिगणयति कुन्तक:, उदाहरति च वैशब्द्येन प्रसिद्धश्लोक-व्याख्या साहाय्येन। जिज्ञासुभि: सहृदयै: श्रोतृवृन्दै: स्वकुतूहलशान्त्यै वक्रोक्तिजीवितग्रन्थ:अवलोकनीय:। अत्र तु केवलं दिङ्मात्रमुदाह्रियते। तत्र प्रथमं वर्णविन्यासवक्रत्वम्। तच्च अनुप्रासालंकारे यमके च दृश्यते। भवभूते: कूजत्पक्षिवसमाकुलस्य गोदावरीतटतरो: वर्णने 'कूजत्क्लान्तकपोतकुक्कुटकुला: कूले कुलायद्रुमा:, इत्थं वर्णविन्यासच्छटायां काव्यविच्छित्ति: स्पष्टैव। एवमेव आचार्यषट्पद्यां परमेश्वर प्रतिमाल्यो भवता भवतापभीतोहम् इति पंक्तौ 'भवता भवतापभीतोऽहम् इति नियतवर्णक्रमे स्वरव्यंजनसंहतिरूपयमकालंकारे कविविच्छित्ति: सुतरां शोभते। पद-पदाङ्गवक्रता इति द्वितीयो वक्रोक्ति प्रकार:। यदा रामचन्द्र: आत्मन: सकलजीवनं दु:खसंवेदनार्थमेव इति मनस्यनुभवन् 'रामोऽस्मि सर्वं सहे', इति शोकोद्गारं करोति, तदा तद्वाक्ये रामपदोपादानं पदघटकप्रातिपदिक वक्रतां धारयति। कुमारसम्भवे पार्वत्या: समक्षं वटुरूपिण: शिवस्य 'अयं जन: प्रष्टुमनास्तपोधने, न चेद् रहस्यं प्रतिवक्तुमर्हसि' इत्युक्तौ' अहं प्रष्टुमना:' इति नोक्त्वा अयम् इति प्रथमपुरुषनिर्देशे पुरुषवैचित्र्यं मर्मज्ञजनाह्लादि भवति इति स्पष्टमेव। एवमेव पित्रादि गुरुजनसन्निधौ मुग्धाकृतस्य स्वावलोकनस्य वर्णनप्रसंगे नायकस्य 'मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभाग: इत्युक्तौ चकितहरिणीहारीति क्रियाविशेषणम् विशेषणवक्रतारूपि कामप्यपूर्वां विच्छित्तिमावहति। "स दहतु दुरितं शाम्भवो व: शराग्नि:" इति श्लोके दुरितशमनरूपक्रियार्थे 'दहतु' इति 'दह्' धातुप्रयोग: 'शराग्नि'-पदसाहचर्येण क्रियावैचित्र्यं प्रत्याययतीत्यत्र शब्दमर्मज्ञा: प्रमाणम्। वाक्यवक्रताया निरूपणे सर्वोऽपि अर्थालंकारवर्ग: वक्रोक्तिकोटावन्तर्भावयितुं शक्यते, इति आचार्य कुन्तकेन सविस्तरं प्रतिपादितम्। एवं प्रकारेण आचार्यकुन्तक: साहित्यसमीक्षायां काव्यमर्म्मस्थले सुदूरमन्त: प्रविश्य सूक्ष्मेक्षिकया सर्वातिशायिव्यापकदृष्टिमवलंब्य काव्यप्राणभूतां वक्रोक्ति प्रमुख सिद्धान्तरूपेण प्रतिष्ठापयमान इत्यलं पल्लवितेन।

सह तुदुरितं शाम्भवोव: शराग्नि:इतिश्लोकेदुरितशमनरूपक्रियार्थेदहतुंइति'दद्'धातुप्रयोग: शराग्निपदसाहचर्येण क्रियावैचित्र्यं प्रत्यायतीत्यत्र शब्दमार्मिका: प्रमाणम्।

**[आकाशवाणीवार्त्ता : ७.३.१९७२ तिथौ प्रसारिता]**

# ५. भारतीय-काव्यशास्त्रे ध्वनि-सिद्धान्तः

भारतीय काव्यशास्त्रे ध्वनिसिद्धान्तस्य मूर्धन्यतमं स्थानम्। अस्मिन् सिद्धान्ते कविकर्मणः सर्वथा नवीन दृष्ट्या मूल्याङ्कनं भवति। गुणालंकाररीत्यादयः अन्यसिद्धान्ताः काव्यस्य सौन्दर्यदर्शनम् बहिर्मुखदृष्टया कुर्वन्ति, किन्तु काव्यतत्वममर्मान्वेषणे अन्तः प्रविश्य काव्यहृदयान्वेषणमुचितम्। यथा भौतिकं शरीरम्, औदार्यादिगुणाः, भूषणानि, अङ्गसन्निवेशः, अभिनय चेष्टाश्च शरीरसौन्दर्यतत्वं न प्रकाशयन्ति तथैव काव्यसौन्दर्यमपि अन्यसिद्धान्तेषु न लब्धुं शक्यते। अतः काव्यगतोत्कर्षाधायकतत्वम् व्यञ्जनात्मकध्वनौ समीक्षकैः अन्विष्यते। अतएव काव्यस्यात्मा ध्वनिरिति काव्यरसिकाः आमनन्ति।

कोऽसौ ध्वनिर्नाम। पशुपक्ष्यादीनाम् नादः कलरवो वा अविविक्तरूपतया अव्यक्त इति उच्यते। मानवानाम् विविक्तवर्णः पदार्थबोधकः शब्दः व्यक्त इति उच्यते। काव्यशास्त्रे व्यक्त शब्दस्यैव विचारः करणीयः। इदं सर्वानुभवगोचरम् यद् वाच्य प्रतीयमानभेदेन पदार्थः द्विविधो भवति। तत्र प्रतीयमानः अर्थः ध्वनिः। ध्वनिरेव व्यङ्ग्यो भूत्वा व्यङ्ग्यः सन् पदार्थताम् लभते।

एकस्य वाच्यार्थस्य अनेके प्रतीयमानार्थाः सम्भवन्ति। यथा 'गतोऽस्तामर्कः' इति वाक्यस्य सूर्य एव अस्तं गतः इति वाच्यार्थः। किन्तु कोऽस्य वक्ता, कं प्रति एत दुच्यते, कस्मिन् देशे काले वा इदमुच्यते, इत्यादि विभिन्नप्रसङ्गानाम् परामर्शे अस्य वाक्यस्य विभिन्नः प्रतीयमानार्थाः सम्भवन्ति। यथा रात्रेः प्रारम्भकालेः अन्धकारस्य प्रसार, विद्युत्प्रकाशकालः, गृहनिवर्तनसमयः, आकाशवाणीसमाचारश्रवणकालः इत्याद्यनेके भावाः एतद्वाक्यश्रवणानन्तरं मनसि प्रतीतिं गच्छन्ति इति हेतोः प्रतीयमानार्थानामनेकत्वं स्पष्टमेव। तथापि विभिन्नेषु प्रतीयमानार्थेषु सहृदयचमत्कारजनक एव प्रतीतयमानार्थः ध्वनिनाम्ना व्यवह्रियते। स एव काव्य रमणीयतायाः हेतुः, वाच्यार्थस्तु काव्यरमणीयतायाः केवलम् अधिष्ठानम्। ध्वनौ शब्दार्थयोर्मध्ये वाच्यवाचकभावसम्बन्धातिरिक्तः व्यंग्यव्यञ्जकभावसम्बन्धः स्वीक्रियते। व्यङ्ग्य-व्यञ्जकभाव सम्बन्ध-सत्वे एव व्यंग्यार्थः प्रतीयते। अतएव सर्वत्र ध्वनौ व्यङ्ग्यार्थसत्ता समाद्रियते। द्वितीये सीताविरहे भृशं दुःखाक्रान्तो रामो यदा स्निग्धश्यामलान् मेघान् दृष्ट्वा शीकरिणो वातान् संस्पृश्य मयूरध्वनि च श्रुत्वा विलपति कामं सन्तु दृढं कठोरहृदयो "रामोऽस्मि सर्वं सहे" इति तदा 'रामोऽस्मि' इति वाक्यस्य दशरथसूनुः रामः इति वाच्यार्थः कवेः न अभिप्रेतः, किन्तु स रामः यः दुर्वहगर्भखिन्नसीताविवासनपटुः दुःख संवेदनायैव शरीरं धारयन् अत्यन्तं क्रूरकर्मा रामः इति व्यङ्ग्यार्थः सहृदयैरास्वाद्यते।

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी, यस्यां जाग्रति भूतानि सा निशा पश्यतो मुने:" इत्यत्र अभिप्रेतार्थ: क: इति विचारे केवलं वाच्यार्थ: "योगी रात्रौ जागर्ति दिवा स्वपिति" इत्येवार्थ: न चारुतामावहति, चमत्कारं वा जनयति। किन्तु कश्चन तत्वज्ञानविषये जागरूक: मिथ्याज्ञानविषये पराङ्मुख: लोकोत्तर प्राणी, इति प्रतीयमान: व्यङ्ग्यार्थ: चारुतामावहति। चारुत्वहेतु: वाङ्ग्यार्थ: नितरामावश्यक: काव्ये। अतएव ध्वनिसाम्प्रदायिका: काव्ये ध्वने: अनिवार्यताम् साभिनिवेशम् प्रतिपादयन्ति। तेषां मतेन चारुत्वहेतुध्वने: सन्तेव काव्यसत्ताम् निर्धारयति। ध्वनेरभावे कविकर्मण: काव्यत्वमेव निषिध्यते। अतएव ध्वने: प्राधान्याप्राधान्यानुसारं द्विविध: एव काव्यभेद: स्वीक्रियते। अस्पष्टव्यङ्ग्यं व्याङ्ग्यरहितंवा चित्रकाव्यम् न काव्यम्, किन्तु काव्यस्य चित्रम्। अर्थात् काव्यानुकृतिमात्रम्। तत्र वाच्यवाचक भावेवैचित्र्यमूलकत्वेन केवलं विस्मयकारित्वं परिलक्ष्यते। न तु सहृदयहृदयाह्लादकारि काव्य-रामणीयकम् अनुभूयते।

तस्य व्यङ्ग्यार्थस्य त्रयोभेदा: सन्ति, वस्तुध्वनि: अलङ्कारध्वनि: रसध्वनिश्च। वस्तुध्वनौ विधिमुखेन निषेधव्यञ्जनम्, निषेधमुखेन विधिव्यञ्जनं वा दृश्यते। यथा 'भ्रम धार्मिक विस्रब्धमिति श्लोके एकान्तगोदावरीतटे प्रेमालापे बाधाकारिणं धृष्टभिक्षुकम् प्रति नायिकोक्तौ भ्रम इति विधि:, मा भ्रम इति निषेधस्य व्यञ्जक:। पूर्वभयहेतुशुनो मरणेऽपि दृप्त सिंहस्योपस्थित्या इदानीम् अधिक भयकारणसत्वात्। निषेधमुखेन विधिव्यञ्जनस्य "वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्" इति श्लोक उदाहरणम्। तत्र संदेश नयनव्याजेन स्वयं नायकसमागम सुखमनुभूय प्रत्यागताम् दूतीं प्रति नायिकोक्तौ स्नानचिन्हापेक्षया सम्भोगचिन्हानामधिकस्पष्टतया अधमेति नायकविशेषणमहिम्ना च विधिव्यञ्जनकाव्यरसिकै: परिलक्ष्यते। एतयोरुदाहरणयो: व्यङ्ग्यं वस्तुरूपम्, वाच्याद्भिन्नम् इति स्पष्टमेव। अलङ्कारध्वनौ अलंकार: व्यङ्ग्यरूपेण प्रतीयते, यथा—रघुवंशश्लोके "दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि, तस्यामेव रघो: पांड्या: प्रतापं न विषेहिरे।" तत्र दक्षिणायने मन्दकान्तिसूर्यापेक्षपा, दक्षिणदेशेष्वपि अप्रतिहतकान्ते: रघो: वर्णनम् क्रियते। उपमानापेक्षया उपमेयाधिक्ये प्रदर्शिते व्यतिरेकालंकारो भवति। अत्र उपमानसूर्यापेक्षया उपमेयरघोराधिक्यप्रदर्शनरूपव्यतिरेकालङ्कारो न वाच्यरूपेण, किन्तु व्यङ्ग्यरूपेण प्रतिभासते। अतोऽत्र व्यतिरेकालङ्कारो व्यङ्ग्य: इति व्यतिरेकालंकारस्योदाहरणं साधु संगच्छते।

रसध्वनिविषये न्यकारो ह्ययमेव इति प्रसिद्ध श्लोक उदाहरणम्। अत्रि स्वर्गविजयदर्पाध्मातो रावण: शत्रुदर्शनमेव आत्मनोऽपमानं मन्यते, किन्तु अत्र पदप्रत्ययादीनां भावव्यञ्जनोपयोगिना प्रयोगकौशलेन रावणस्यक्रोध: निर्वेदश्च सुस्पष्टं व्यज्येते। रावणस्य अत्र न केवलं शत्रुरेको वर्तते, किन्तु अनेके शत्रव: तत्रापि तेषां तापसत्वं, तत्रापि प्रसह्य लंकाक्रमणं, तत्रापि क्रियमाणोराक्षसकुलध: इति एतत्सर्वमुत्तरोतराधिकममर्षवर्धकम्। एवं सत्यपि "अहं जीवामि' इति हेतो: रावणस्य हृदये महान् निर्वेद: कोपश्च उत्पद्येते। अस्मिन् श्लोके कोपनिर्वेदौ रसभावौ न वाच्यरूपेण, किन्तु व्यङ्ग्यरूपेण प्रदर्शिताविति रसध्वने: रसांगभावध्वने: चेदमुत्कृष्ट मुदाहरणं संगच्छते।

वस्तुतस्तु सहृदयास्वाद्यकोटौ रसस्यैव प्रधानता, वस्त्वलंकारध्वन्योः पर्यवसानं रस-ध्वनौ एव। अतएव काव्यात्मत्वं वस्त्वलंकारध्वन्योः प्रतिपादितमपि रसध्वनौ विशेषतः स्वीक्रियते। अतएव रसविषये "काव्यस्यात्मा स एवार्थः" इत्यभियुक्तोक्तिः सङ्गच्छते।

सोयं ध्वनिसिद्धान्तः संस्कृतवाङ्मये काव्यसमीक्षाकारैः सुपरीक्षितः समालोचितश्च भूत्वा परां प्रसिद्धिं नीतः। आनन्दवर्धनकालादनन्तरं काव्यतत्वचर्चायामयं सिद्धान्तः प्रामुख्यं प्राप। वक्रोक्ति-वादः, अनुमितिवादश्च क्रमशः कुन्तकेन महिमभट्टेन च साग्रहं प्रतिपादितावपि एकदेशिसिद्धान्तरूपेणैव ख्यातिं भजतः। मूर्धाभिषिक्तसिद्धान्तपदं तु ध्वनि सिद्धान्तस्यैवेत्यत्र न काव्यरसिकानां वैमत्यम्। अतएव सकलसत्कविकाव्योपनिषद् ध्वनिरिति ध्वनेर्महिमा गीयते।

**[आकाशवाणी वार्ता : २३-१-१९७२ तिथौ प्रसारिता]**

# ६. रसगङ्गाधरस्य पूर्णताविषयिणी चर्चा

साहित्यशास्त्रे सुप्रसिद्धो रसगङ्गाधरनामा ग्रन्थ अपूर्ण एवोपलभ्यते इति विदितमेव सर्वेषां विदुषाम्। अद्यावधि प्रकाशितेषु ग्रन्थेषु द्वितीयानने उत्तरालङ्कारनिरूपणावसरे उदाहृताया आर्याया पादत्रयानन्तरमेव ग्रन्थोऽयम् अकस्मादेव त्रुटितो लभ्यते—

किं कुर्वते दरिद्राः, का सारवती धरा मनोज्ञतरा ।
को पावनस्त्रिलोक्याम् ..................

अयं त्रुटितोंऽशः सर्वत्र देशे तथैवोपलभ्यते इति महदाश्चर्यम्, यतः पादत्रयानन्तरमेव ग्रन्थत्रुटिः न स्वाभाविकी दृश्यते । तर्हि किं ग्रन्थकारेण कौतूहलोत्पादनाय ग्रन्थः त्रुटित एव त्यक्तः स्यात्।

मद्रासनगर्यां गवर्नमेंटओरियण्टलमैन्यूस्क्रिप्ट-ग्रन्थालये रसगङ्गाधरः सम्पूर्णत्वेन उपलभ्यते–इति वार्त्ता श्रुतिपथमायाता। कौतूहलजनकोऽयं विषयो हृदि स्थित आसीत्। कालान्तरे मद्रासनगरीं गतवता मया तद्विषयिण्या जिज्ञासायाः शान्तये सम्बद्धग्रन्थालये ग्रन्थालयाध्यक्षैः सह सम्पर्कः स्थापितः। तत्फलस्वरूपं निम्नाङ्किताः सूचनाः उपलब्धाः जिज्ञासूनां कृते निवेद्यन्ते-

मद्रासनगरे गवर्नमेंट-ओरियण्टल-मैन्यूस्क्रिप्टग्रन्थालयो मद्रासविश्वविद्यालयस्य सविध एव स्थितोऽस्ति। तत्र अष्टादशाधिकएकोनविंशतिशततमे ईस्वी-वर्षे हस्तलिखित ग्रन्थानां वर्णनात्मिका सूची प्रथितयशोभिः कुप्पूस्वामिशास्त्रिमहाभागैःप्रकाशिता, तदनुसारं ग्रन्थालये रसगङ्गाधरस्य पञ्च हस्तलिखितपाण्डुलिपयः सन्ति। तेषु द्वे (१२९२२, १२९२३ क्रमाङ्किते) तेलुगुलिप्याम्, अवशिष्टास्तिस्रः ताडपत्राङ्किता ग्रन्थलिप्यां (तामिललिप्यां) वर्तन्ते। अन्तिमाः तिस्रः प्रथमाननावधि संशयालङ्कारावधिवालभ्यन्ते। अपूर्णत्वेन च तासां स्पष्टो निर्देशः। किन्तु प्रथमोक्तपाण्डुलिपिद्वयविषये भ्रमवशात् सम्पूर्णग्रन्थात्मिका इति मुद्रितसूच्यां निर्दिष्टं वर्तते। प्रथमपाण्डुलिप्यां च उक्तार्याश्लोकस्य चतुर्थपादोऽपि एवंविधो दृश्यते—

**गुरुपदभाग्यासुदेतोयम् ।**

अयं चरणः कोष्ठकान्तरगतः ( ) वर्तते, अनेन अस्य क्षेपकत्वमनुमीयते। किन्तु उपलब्धपाण्डुलिपीनां साक्षादवलोकनेन प्रथमा पाण्डुलिपिः मुद्रितपुस्तकमिव अपूर्णा वर्तते। द्वितीय-पाडुलिपौ तु तृतीयपादस्थाने तृतीयचतुर्थपादौ इत्थम्—

को वा धवस्त्रिलोक्यां
गुरुपदभाग्यासुदेतोयम् ।

एतद्विषयस्य सम्पूर्णपर्यालोचनेन इत्थं प्रतीयते यद् ग्रन्थसूच्यां प्रथमद्वितीयपाण्डुलिप्यो: विषये भ्रमो दृश्यते, अर्थात् सम्पूर्णग्रन्थत्वेन निर्दिष्टा पाण्डुलिप्य: मुद्रितग्रन्थ इव अपूर्णा एव वर्तते। द्वितीयपाण्डुलिपौ चतुर्थपादानन्तरं पुष्पिकेत्थं दृश्यते—

इति रसगङ्गाधरे उत्तर प्रकरणं समाप्तम् ।

एतत्पुष्पिकादर्शनेनैव ग्रन्थसमाप्तिभ्रम: सञ्जात: स्यात्। तथैव च सूचना ग्रन्थसूच्यां प्रकाशिता। एवं साकल्येन पर्यालोचने कृते रसगङ्गाधरनामा ग्रन्थ: अपूर्ण एव आस्ते। केवलं चतुर्थपादस्य कोष्ठान्तर्गतसन्निवेश:एव नवीनोपक्रमोऽस्तीति।

इदानीमयं प्रश्न: समुदेति, कोऽर्थ: खलु नवसन्निविष्टचतुर्थपादस्य? तस्य च प्रकृते किं स्वारस्यम् इति अद्यापि अनाकलितं वर्तते। ग्रन्थालये तत्रत्यैर्विद्वज्जनै: सह कृतायां चर्चायामित्थं सूचितमासीत् यत् कुप्पूस्वामिशास्त्रिणां संरक्षणे प्रकाशितायां ग्रन्थसूच्यां तत्र क्रमाङ्कितपाण्डुलिपि विषये केनचित् पण्डितेन प्रकरणानुरूपतया चतुर्थपाद: सन्निवेशित:; परन्तु तस्य स्पष्टव्याख्या नेदानीं केनापि तत्र कृता, कर्तुं शक्तश्च न कोऽपि दृष्ट:। विदुषां पुरस्तादिमं विषयं समुपस्थाप्य जिज्ञास्यते यत् चतुर्थपादसन्निवेशस्य किं तात्पर्यं कीदृशं च तस्य प्रकरणानुरूपत्वम्? आशास्यते काव्यशास्त्र-मर्मज्ञा एतद्रहस्योद्घाटने रुचिं प्रदर्शयिष्यन्ति।

**['संगमनी' संस्कृत त्रैमासिक पत्रिकायां (प्रयागे)
संवत् २०२३ विक्रम वर्षे प्रकाशित:]**

# ७. अनुष्टुभ्-छन्दसः सामान्यापवादप्रकाराः

वाल्मीकिकविना लोके, छन्दस्यस्मिन्प्रचारिते।
अष्टाक्षरीयचरणाः चत्वारः सन्त्यनुष्टुभि॥

[आदिकविवाल्मीकिना लौकिकसंस्कृतवाङ्मये प्रचारिते अनुष्टुभि छन्दसि अष्टाक्षरात्मकाः चत्वारः पादा भवन्ति। वैदिकसंस्कृते तु शिथिलबन्धमिदं छन्दः वेदकालादेव दृश्यते]

### समपादभेदाः

द्विचतुष्पादयोरन्ते जगौ ज्ञेयौ सुनिश्चितम्॥
'भ ज या त म' मध्यात्तु गणो यस्मात्प्रदृश्यते॥
द्वित्रितूर्याक्षरेष्वेकः, तस्मात्पञ्चविधौ हि तौ॥
आद्यस्य लत्वे गत्वे वा द्वित्वाद्भेदा दश स्मृताः॥

[तस्यानुष्टुभः समपादयोर्द्वितीयचतुर्थचरणयोः अन्ते पञ्चमषष्ठसप्तमाष्टमाक्षरसमूहे जगणो (।ऽ।) गुरुश्च भवति सर्वत्र निश्चयेन। द्वितीयतृतीयचतुर्थाक्षरसमूहे तु भगण (ऽ।।) जगण (।ऽ।) यगण (।ऽऽ) तगण (ऽऽ।) मगणनां (ऽऽऽ) मध्यादेकः कश्चन गणो दृश्यते। एवं च समपादे पञ्चगणवैकल्प्येन पञ्च भेदाः, तत्रापि प्रथमाक्षरो लघुर्गुरुर्वा भवितुमर्हतीति हेतोः, पञ्चविधस्य समपादस्य द्विगुणीकरणात् साकल्येन दश भेदा भवन्ति।]

### विषमपादभेदाः

एकत्रिपादयोरेवं भेदसंख्या प्रतीयताम्।
पञ्चषट्सप्तवर्णानां समूहे परिदृश्यते
'भ य रा म न' मध्यात्तु गण एकः सुनिश्चितम्॥
तस्मात्पञ्चविधावेतौ पादौ नु विषमौ मतौ
एकैकशो विचारोऽस्य भेदानां क्रियतेऽधुना।

[अस्यानुष्टुभो विषमपादयोः प्रथमतृतीयचरणयोः भेदसंख्या निम्नलिखितप्रकारेण ज्ञेया। तत्र पञ्चमषष्ठसप्तमवर्णानां समूहे भगण (ऽ।।) यगण (।ऽऽ) रगण (ऽ।ऽ) मगण (ऽऽऽ) नगणानां (।।।) मध्यात् एकः कश्चन गणो निश्चयेन दृश्यते। तस्मात् विषमपादः प्रथमं पंचविधो भवति। इदानीं प्रत्येकविधस्य विषमपादस्य विभिन्नभेदानां विचारः क्रमेण क्रियते।]

## (१) भगणीयविषमपादभेदाः

पञ्चषट्सप्तवर्णेषु **भगणे** 'सति दृश्यते
**'ज स या र त मा'** नां तु एक आद्याक्षरत्रयी।
सदा गुरुस्तूर्यवर्णोऽतः षड् भेदाः प्रकीर्तिताः॥

[भगणीयविषमपादे अर्थात् यत्र पञ्चमषष्टसप्तमवर्णानां समूहे भगणो (ऽ।।) दृश्यते तथाविधे विषमपादे प्रथमद्वितीयतृतीयाक्षरसमूहे जगण (।ऽ।) सगण (।।ऽ) यगण (।ऽऽ) रगण (ऽ।ऽ) तगण (ऽऽ।) मगणानां (ऽऽऽ) मध्यात् एकः कश्चन गणो निश्चयेन दृश्यते। चतुर्थवर्णस्तु सर्वदा गुरुदेव भवति। तस्मात् आद्याक्षरत्रये गणषट्कवैकल्प्येन भगणीय-विषम-पादस्यषड् भेदा भवन्ति।]

## (२) यगणीयविषमपादभेदाः

पञ्चषट्सप्तवर्णेषु **यगणे** सति दृश्यते
**'ज स या र त मा'** नां तु एक आद्याक्षरत्रयी।
ततो भवन्ति षड्भेदाः—**यगणीय**विमर्शने—
तूर्यस्य लत्वे गत्वे वा भेदा द्वादश द्वित्वतः।

[यगणीयविषमपादेऽपि भगणीयविषमपादवत् आद्याक्षरत्रय्यां जगण (।ऽ।) सगण (।।ऽ) यगण (।ऽऽ) रगण (ऽ।ऽ) तगण (ऽऽ।) मगणानां (ऽऽऽ) वैकल्प्येन षड्भेदा भवन्ति। किन्त्वत्र चतुर्थाक्षरो लघुर्गुरुर्वा भवितुमर्हतीति षड्विधस्य यगणीयविषमपादस्य द्विगुणीकरणात् साकल्येन द्वादश भेदा भवन्ति।

श्लोकपद्याह्वयं वृत्तं छन्दोविद्भिः सुसंज्ञितम्।
एतद्द्वादशभेदेषु सुतरां परिदृश्यते॥
अतोऽन्ये विषमाः पादा **अपवाद** स्वरूपिणः।

[छन्दःशास्त्रग्रन्थेषु श्लोकपद्यान्यतराभिधस्य अनुष्टुप्छन्दसो यत् "पञ्चमं लघु सर्वत्र, सप्तमं द्विचतुर्थयोः। षष्ठं गुरु विजानीयात्" इत्यादि लक्षणं दृश्यते, तस्योदाहरणस्वरूपा इमे यगणीयविषमपादस्य द्वादश भेदाः सन्ति। अन्ये (उक्ता वक्ष्यमाणाश्च) भगणीयादि-विषमपादभेदास्तु निर्दिष्टलक्षणं नानुसरन्तीति तदपवादस्वरूपिणो ज्ञेयाः।]

## (३) रगणीयविषमपादभेदाः

पञ्चषट्सप्तवर्णेषु रगणे सति दृश्यते।
**'ज स या र त मा'** नां तु एक आद्याक्षरत्रयी।
सदा गुरुस्तूर्यवर्णः; भेदास्तस्मात् स्मृताः षट्॥

[रगणीयविषमपादे भगणीयविषमपादवत् आद्याक्षरत्रय्यां जगणादिगणषट्कवैकल्प्येन षड्भेदा भवन्ति। चतुर्थवर्णस्तु सर्वदा गुरुर्भवति।]

## (४) मगणीयविषमपादभेदाः

पञ्चषट्सप्तवर्णेषु मगणे सति दृश्यते।
एक एव गणो नूनं द्वित्रितूर्याक्षरेषु 'र'ः॥
आद्यस्य लत्वे गत्वे वा द्वौ भेदौ परिकीर्तितौ।

[मगणीयविषमपादे द्वितीयतृतीयचतुर्थाक्षरसमूहे एक एव गणः रगणः (ऽ।ऽ) सर्वदा दृश्यते। प्रथमाक्षरस्तु लघुगुरुर्वा भवितुमर्हतीति भगणीयविषमपादस्य द्वौ भेदौ भवतः।]

## (५) नगणीयविषमपादभेदाः

पञ्चषट्सप्तवर्णेषु नगणे सति दृश्यते।
**'ज स या र त मा'** नां तु एक आद्याक्षरत्रयी
सदा गुरुस्तूर्यवर्णः, भेदास्तस्मात्स्मृताः षट्।

[नगणीयविषमपादेऽपि भगणीयविषमपादवत् आद्याक्षरत्रय्यां जगणादिगणषट्क-वैकल्प्येन षड्भेदा भवन्ति। चतुर्थवर्णस्तु गुरुरेव भवति।]

### उपसहारः

एवं विंशतिभेदा वै, **अपवादस्वरूपिणः**।
विषमस्य हि पादस्य दृश्यन्ते सुविचारतः।

[एवं सूक्ष्मविचारे कृते अपवादरूपाणां मगणीय-रगणीय-मगणीय-नगणीयविषमपादानां साकल्येन (षट्+षट्+द्वौ+षट्) विंशतिर्भेदा दृश्यन्ते।]

भेदा दश **समे** पादे द्वात्रिंशद् **विषमे** मताः।
ज्ञायतां भेदसंख्यैवं प्रकाराणामनुष्टुभः॥

[एवं रीत्या अनुष्टुप्छन्दसः समे पादे दश भेदाः विषमे पादे द्वात्रिंशत् (१२ लक्षणानु-सारम्+२० अपवादरूपाः) भेदाः दृश्यन्ते।]

**नागपुर यूनिवर्सिटी जर्नल (१९४०) में प्रकाशित**
**प्रत्येक प्रकार के उदाहरण अंग्रेजी निबन्ध में पृ. 194—96 देखिये**

# ८. वैदिकसूक्तमुक्तावल्याः भूमिका

इह हि धर्मप्राणे भारतवर्षे परब्रह्मणो निःश्वसितत्वेन परां ख्यातिं गतानां वेदानां माहात्म्यं सकलभूतल-ग्रन्थानतिशय्य वर्तते। अन्यधर्मावलम्बिनां धर्मग्रन्थाः तत्तद्धर्माद्यपुरुषैः प्रवर्तिताः विशिष्टकालादारभ्य प्रचारं गताश्च, वेदास्तु अनादिकालादव्यवच्छिन्नपरम्परया प्रवर्तमानाः 'अपौरुषेयाः' इति धर्मग्रन्थान्तराप्राप्तपदवीं वहन्ति। सकलज्ञानबीजनिधयो वेदाः। 'वेदोऽखिलो धर्ममूलम्' इति स्मृत्यनुसारमनन्यजुष्टां धर्ममूलत्वेन प्रसिद्धिं लभन्ते। अतएव 'प्रामाण्यबुद्धिर्वेदेषु' इति हिन्दुधर्मावलम्बिनां वेदविषये श्रद्धातिशयप्रतिपादिनी सूक्तिः सङ्गच्छते। ते च वेदाश्चत्वारः—ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेद इति। पद्यमयानामृचां, गद्यमयानां यजुषां गायनोपयुक्तानां साम्नां सङ्ग्रहेण प्रथमवेदत्रय्या यथार्थनामत्वम्। अथर्वाङ्गिरोदृष्टत्वेन चतुर्थस्यापि अन्वर्थत्वमेव। चतुर्ष्वपि वेदेषु ऋग्वेदस्योपजीव्यत्वं प्राधान्यं च वेदभाष्यकारैः सायणाचार्यैरित्थं प्रतिपादितम्—'ऋग्वेदस्य प्राथम्येन सर्वत्राम्नातत्वमभ्यर्हितत्वं च ... मन्त्रकाण्डेष्वपि यजुर्वेदगतेषु तत्र तत्र प्रयोज्या ऋचो बहव आम्नाताः। (सामवेदस्य) साम्नां तु सर्वेषामृगाश्रितत्वं प्रसिद्धम्। आथर्वणिकैरपि स्वकीयसंहितायामृच एव बाहुल्येनाधीयन्ते। अतोऽन्यैः सर्वैर्वेदैरादृतत्वादभ्यर्हितत्वम्।' तत्तद्वेदानां मन्त्रसङ्ख्यापर्यालोचनेनापि सायणोक्तं समर्थ्यते। तथाहि—यजुर्वेदस्य चतुर्थांशादधिको भागः, अथर्ववेदस्य षष्ठांशादधिको भागश्च ऋग्वेदेऽप्युपलभ्यते। सामवेदे तु पञ्चसप्ततिसङ्ख्याका ऋचः परित्यज्य सर्वमपरमृग्वेदान्तर्गतमेव। तदेवमृग्वेदस्य मूलवेदत्वेन प्रसिद्धिर्नाभूतार्थवादिनीति ज्ञेयम्।

न केवलं भारतवर्षेऽपि तु जगद्वाङ्मयेऽपि ऋग्वेदस्य परमगौरवं प्राचीनतमत्वं च सर्वैरपि पारस्त्यविद्यानिष्णातैर्जनैर्निःसङ्कोचं स्वीक्रियते। प्राचीनतमत्वमभिलक्ष्य अ (ज्ञात) पुरुषकर्तृकत्वेनास्य अपौरुषेयत्वव्यवहारः सुतरां समुपपद्यते। एष च वेदो न केवलं ज्ञानबीजनिधिरेव अपि तु प्राचीनभारतसंस्कृतेः परिचायकोऽपि। किं बहुना, जागतिक्या मानवीयसंस्कृतेः क्रमिकविकासस्य परिज्ञानायास्य ग्रन्थरत्नस्य महाननन्यसाध्य उपयोगः। वैदेशिकविद्वद्भिरस्य प्रगाढमध्ययनं कृत्वा प्राचीनकाले मनुष्यजातेः संस्कृतिस्वरूपविषये सोहापोहो विमर्शः कृतोऽस्ति। प्रोक्तं च भट्टमोक्षमूलरेण 'यावत्तिष्ठन्ति गिरयः, सरितश्च महीतले। तावदृग्वेदमहिमा भूतले प्रचरिष्यते।' 'दाशतयी संहिता' इतिनाम्ना निर्देश ऋग्वेदस्य दशमण्डलात्मकत्वं सूचयति। तत्र द्वितीयादिसप्तमान्तमण्डलानि क्रमशो गृत्समद-विश्वामित्र-गौतम-अत्रि-भरद्वाज-वसिष्ठैस्तद्गोत्रजर्षिभिर्वा दृष्टानीति एकर्षिवंशसम्बद्धानि। अन्यमण्डलेषु कण्वाद्यनेकर्षिवंशदृष्टा ऋचो दृश्यन्ते।

धिकसहस्रं सूक्तानि, ऋक्समूहः सूक्तमिति कृत्वा उपषट्शताधिकदशसहस्राणि ऋचो वर्तन्ते। तदेवमृग्वेदीयमन्त्रनिर्देशे क्रमशो मण्डलसूक्तर्चां संख्या लिख्यन्ते। ऋग्वेदस्यापरोऽपि परम्परागतो विभागक्रमोऽस्ति। तत्र प्रथममृग्वेदस्य अष्टकाख्येषु समानाष्टभागेषु विभागः, प्रत्येकाष्टके अष्टावध्यायाः, प्रत्येकाध्याये वर्गाः, वर्गेषु च ऋच इत्येवंक्रमोऽनुस्रियते। एवं चापरक्रमे अष्टकाध्यायवर्गर्चां क्रमशो निर्देशकं सङ्ख्याचतुष्टयं भवतीति ज्ञेयम्।

ऋग्वेदस्थमन्त्राणां पाठभ्रंशदोषसम्भावनां निराकर्तुमर्थबोधोपयोगिपदच्छेदं प्रदर्शयितुं च शाकल्याचार्येण पदपाठो विरचितोऽस्ति। तत्र न केवलं सन्धिव्यवच्छेदपूर्वकं पदानां पार्थक्येनोपन्यास, अपि तु समस्तपदानां व्यास, (विशेषस्थलेषु) प्रकृतिप्रत्ययविभागश्च अवग्रहचिह्न (ऽ) प्रदर्शनेन क्रियते। संहितापदपाठयोः सम्बन्धपरिज्ञानाय एकतराच्चान्यतरस्य निर्माणाय 'ऋक्प्रातिशाख्य' स्याध्ययनं कार्यम्। कात्यायनप्रणीत 'सर्वानुक्रमण्यां' सर्वमन्त्राणां संख्याच्छन्दोदेवताप्रकरणादीनां निर्देशः कृतोऽस्ति, यस्य तत्तत्स्थले सूक्तभाष्यादौ सायणाचार्यैरुद्धरण क्रियते। ऋक्षु पदपाठे च प्रतिपदमुदात्तादिस्वरबोधकचिह्नानां व्यवहारो भवतीति तत्परिज्ञानायेमे स्थूलनियमा अवधेयाः। (१) अचिह्नितमक्षरम् उदात्तम् (२) अधश्चियितम् अनुदात्तम्, (३) उपरिचिह्नितं स्वरितम्। यथा **नृम्णस्य** इत्यत्र 'नृ' अनुदात्त; 'म्ण' उदात्तः, 'स्य' स्वरितोऽस्ति। स्वरितादनन्तरम् अचिह्नितमक्षरमक्षराणि वा 'प्रचय' संज्ञया व्यवह्रियन्ते इत्यधिको विशेषः, यथा **'मनास्वान'** इत्यत्र' स्वान्' इति 'प्रचयः'। स्वरविशेषज्ञानाय सिद्धान्तकौमुदीस्था स्वरप्रक्रियाऽवलोकनीया। 'ऋषिं छन्दो दैवतानि ब्राह्मणार्थं स्वराद्यपि। अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते' इतिवचनात्प्रतिमन्त्रं छन्दोदेवतादिज्ञानमावश्यकम्। एवमेव 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदान्न विजानाति योऽर्थम्' इति कलङ्कपरिहारार्थम् वेदार्थज्ञानेऽपि प्रयतितव्यम्।

वर्तमाने संस्कृतवाङमयाध्ययनक्रमे शास्त्रि—वैदिकभेदेन विद्वांस उपलभ्यन्ते। तत्र शास्त्राध्येतारो व्याकरणसाहित्यादिविषयानधीत्यापि वेदान्न जानन्ति, वैदिकाश्च केवलं वेदानेव रटन्तस्तदर्थं ज्ञातुं न प्रयतन्ते। एवंविधस्यावाञ्छनीयस्यैकाङ्गपाण्डित्यस्य निराकरणाय नागपुरविश्वविद्यालयीयविशारदपरीक्षायामृग्वेदस्य कानिचित्सूक्तानि निर्धारितानि सन्ति, येन शास्त्राध्येतारोऽपि वेदाध्ययने प्रवर्तेरन्। एकस्मिन्स्थलेऽनुपलब्धानि तानि सूक्तानि निर्धन-विद्यार्थिभिर्दुरवापानि स्युरित्याशङ्काभीतेन, तेषामेकस्मिंल्लघुपुस्तके संमुद्रणं चिकीर्षता च मया तत्कर्तुं प्रार्थिता जाबालिपुरस्थगायत्रीसंस्कृतब्रह्मचर्याश्रमस्य शिक्षकाः श्रीविश्वनाथत्रिपाठिनः शीघ्रमेवास्य प्रकाशनोद्योगे दत्तचित्ता अभूवन्। झटित्येव जाबालिपुरवास्तव्याढ्वैश्यवंशावतंसात् श्रीरामकुमारश्रेष्ठिमहोदयात् प्रकाशनार्थमावश्यकद्रव्यमपि तैः समासादितमित्यहो अभिनन्दनीयं तेषामङ्गीकृतकार्यसम्पादनपाटवम्। विशारदपरीक्षायामुपविविक्षुभ्यश्छात्रेभ्यो निःशुल्कं सभाष्यां वैदिकसूक्तावलिं वितरीतुकामैः श्रीरामकुमारश्रेष्ठिमहोदयैः—धर्मकर्मारुचिप्रदर्शकजनसंकुलेऽस्मिन् कलौ—स्वकीयौदार्यं प्रकाश्य वेदविद्याभिमानिन अतीवोपकृता इति नात्र स्तोकोऽपि सन्देहः। एवमेव 'सुबोधसिन्धु' मुद्रणालयाध्यक्षैः श्रीयुतप्रयागीमहोदयैरेतद्ग्रन्थस्य

[८२ पृष्ठे द्रष्टव्यम्]

# ९. सरस्वती श्रुतिमहती महीयताम्

यस्याः संस्कृतभाषायाः संरक्षणार्थम् उन्नयनार्थं च धृतव्रता भवन्तः सर्वेऽत्र समवेता तस्याः गौरवं वैशिष्ट्यं च जगतः सर्वैरपि विद्यारसिकैरद्यतने काले निःसंशयमनुमन्यते स्वीक्रियते च : यूरोपदेशे यदा संस्कृतग्रन्थानां परिचयो जातः तदा तत्रत्यैर्विद्वज्जनैः साश्चर्यं सामोदं च तेषां स्वागतं कृतम्। भारतीय-दर्शनशास्त्रस्य आधारभूतानां दशोपनिषदां परम्पराक्रम-प्राप्तमपि अनुवादं पठित्वा प्रसिद्ध-जर्मनदार्शनिकः शापनहारः स्वजीवनस्य धन्यतां मेने। प्रथितयशा गेटेमहाकविः 'शाकुन्तल' नाटकस्य फ्रेञ्चभाषायाम् अनुवादं दृष्ट्वा प्रशंसोद्गारं प्रकटयामास। तस्य संस्कृतभाषायामयं श्लोकानुवादः केनचिद्विदुषा कृतोऽस्ति—

वासन्तं कुसुमे फलं च युगपद् ग्रीष्मस्य सर्वं च यत्<br>
यच्चान्यन्मनसो विकासकमथो सन्तर्पणे मोहनम्।<br>
एकीभूतमभूतपूर्वमथवा स्वर्लोकभूलोकयो-<br>
रैश्वर्यं यदि वाञ्छसि प्रिय सखे शाकुन्तलं सेव्यताम्।

ससायण-भाष्यस्य ऋग्वेदस्य सम्पादकः प्रख्यातो जर्मन-संस्कृतज्ञः मैक्समूलरः पुनर्जन्मसिद्धान्ते ख्रिस्तधर्मावलम्बित्वेन अधृतविश्वासोऽपि आत्मनो भाविजन्म वाराणस्यां वैदिककुले समकांक्षत।

किं बहुना संस्कृतभाषायाः ग्रन्थरत्नेषु यद्यच्छब्दगतमर्थगतं वा माधुर्यं तद्रसास्वादेन प्रल्हादितचेतसः सर्वेऽपि विश्वस्य विद्वज्जनाः अस्याः भाषायाः भूरि भूरि प्रशंसां कुर्वन्ति। संस्कृतभाषायाः परिचयं लब्ध्वा ग्रीकलैटिनादि-पुरातनभाषाभिः सह सादृश्यं निरीक्ष्य पाश्चात्य विद्वांसः फाइलालॉजी (भाषाशास्त्रम्) इति नूतनस्य शास्त्रस्यावतारम् अकुर्वन्। एवमेव वेदेषु इन्द्रादिदेवविषयकाणि सूक्तानि, तथा पुराणेषु प्रतिपादितदेवकथाः सम्यगाकलय्य यूरोपदेशीयैर्मनीषिभिः 'माइथालॉजी' (देवताशास्त्रम्) इति अपरस्य नवीन-शास्त्रस्य प्रादुर्भावं कर्तुमपारि। तदेवंप्रकारेण संस्कृतभाषां प्रति विदेशीया अपि स्वाधमर्णताप्रकाशने परमं प्रमोदमावहन्ति। ततः किं वक्तव्यमस्मद्देशविषये। भारतवर्षे तु अतिप्राचीनकालादारभ्य अद्यपर्यन्तम् अस्याः अध्ययनाध्यापनपरम्परा अक्षुण्णरीत्या प्रवहमाना दृश्यते। संस्कृतभाषा भारतीय-संस्कृतेरात्मैव। अस्या एव संरक्षणेन भारतीयत्वस्य रक्षणमिति निःसन्दिग्धं वचः। अतएव स्वातन्त्र्यसूर्योदये जाते सर्वासु दिक्षु देशस्य सर्वाङ्गीण-विकासं कामयमानानां देश हितैषिणां प्रचलितेषु बहुविधेषु प्रयत्नेषु संस्कृतभाषाप्रचार इत्येकोऽस्ति अभिनन्दनीयः प्रयत्नः।

किं कारणमिति जिज्ञासायां समुपन्यस्यन्तेऽत्र केचन हेतवः। वर्तमानकाले भारतवर्षे प्रचलिताः सर्वा अपि भाषाः तज्जन्यत्वरूपेण तत्प्रभावितत्वरूपेण वा संस्कृतभाषोपजीव्यतामाश्रयन्ते। संस्कृतभाषायामसञ्जातप्रवेशो भारतीयभाषासु प्रागल्भ्यं प्राप्तुं न शक्नोति। भाषायां कालक्रमेण परिवर्तनमनिवार्यम्। अतएव भारतवर्षेऽपि पाली—प्राकृतापभ्रंशभाषादयो जन्म लेभिरे। "दैवी वाग्व्यवकीर्णेयमशक्तैरभिधातृभिः" इति भर्तृहरिः स्वकीये वाक्यपदीयनामके ग्रन्थे कथयति। शुद्धोच्चारणेऽशक्ता अभिधातारः अर्थात् वक्तारः इमां दैवीं वाचं (संस्कृतभाषां) व्यवकीर्णामर्थात् विविधरूपेषु परिवर्तितामकुर्वन्। अतएव ताः परिवर्तितभाषा प्राकृतापभ्रंशादिनामभिः निर्दिश्यन्ते। संस्कृतभाषायाः 'संस्कृत' इति नामकरणमेवास्याः संस्कारयुक्तत्वमुद्घोषयति। सर्वापि भाषा द्विविधा। संस्कृता असंस्कृता च। तत्र संस्कारो नाम व्याकरणानुसारेण शिक्षाप्रतिशाख्योक्त–तत्तत्स्थानप्रयत्नादिनोच्चारणरूपः प्रयत्नः, उपनयनादिसंस्कारवत्। या भाषा व्याकरणनियमानुलङ्घ्य यथेच्छं जनैर्व्यवह्रियते सा असंस्कृता अर्थात् प्रकृति (जन) प्रचलितत्वेन प्रकृति-सिद्धत्वेन वा प्राकृतेति नाम्नाभिधीयते। तदेवं 'दैवी' वाक् इति नाम्नाभिहितायाः संस्कृत-भाषायाः सकाशादेव इमा मानुष्यः प्राकृतादिभाषाः विकासं लेभुः। संस्कृत-भाषायाः पाणिन्यादिव्याकरणेन नियमनमस्याः कालत्रयेऽपि एकरूपतां स्थापयति, येन कारणेन अनेकसहस्रवर्षेभ्यः पूर्वमपि प्रयुक्ता संस्कृता वाक् तस्यां लिखिताश्च ग्रन्थाः अधुनापि सौकर्येण बोद्धुं शक्यन्ते। इदमेवास्या भाषायाः संस्कृतत्वम्। अन्यास्तु देशकालभेदेन परिवर्तनं लभमानाः स्वस्वरूपं परित्यज्य नवं नवं रूपं धारयन्त्यः प्राकृतभाषाः दुर्बोधाः जायन्ते। वस्तुतस्तु संस्कृतभाषा अस्ति बुधभाषा, शिष्टभाषा, शास्त्रभाषा च। अन्यास्तु परिवर्तनप्रियत्वेन जनभाषेति संज्ञामर्हन्ति। अतएव भारतदेशे स्वग्रंथस्य स्थायितां कामयमानाः ग्रन्थकर्तारः स्वग्रन्थान् संस्कृत-भाषायामेव निर्मिमते। तदैव च शक्यते तेषां ग्रन्थानामखिलदेशप्रचारः। तत्तत्प्रान्तीयभाषासु विरचिताः ग्रन्थाः अन्यदृष्ट्योपादेया अपि संकुचित-क्षेत्रेषु एव प्रचारं लभन्ते। न तेषां कदापि सकलदेशप्रचारः सुशकः, अखिलभारतीयकीर्तिश्च सुलभा। अनेनैव कारणेन भारतीयवाङ्मयस्येतिहासे इदं पुनः पुनः समवलोक्यते यत् परिवर्तमाना अपि इमाः प्राकृतादिभाषाः पुनः पुनः संस्कृतभाषासविधे तत्समशब्दग्रहणार्थं नीयन्ते। तदैव च ताः संस्कृतशब्दसामर्थ्येन परिपुष्टाः कालान्तरेऽपि जीवनशक्तिं धारयन्ति। हिन्दी-साहित्यस्य आधुनिक-काव्यग्रन्थेषु, विशेषतः माननीय-मिश्र महोदय-विरचिते 'कृष्णायन' महाकाव्ये तत्सम-संस्कृत-शब्दानां बहुलप्रयोगः अनयैव बुद्ध्या कृतोऽस्ति इति सर्वथा समीचीनम्।

अयं च अपरो हेतुः, संस्कृतभाषाया अधिकाधिकप्रचारस्याभीष्टत्वसम्बन्धे। भारतीय संस्कृति-पर्यालोचनेन विदितमेव स्यात्सर्वेषां यद् भारतीयसंस्कृतेरैक्यसंस्थापने संस्कृतभाषा प्रधानतमं साधनम्। अस्मद्धर्मकृत्यानि संस्कृतमंत्रोच्चारणपूर्वकं क्रियन्ते। समस्तदेशे ऋग्वेदकालादारभ्य अद्य यावत् 'गृभ्णामि ते सौभगत्वाय हस्तम्—' इति मंत्रपाठः भारतीय— विवाहस्य अच्छेद्यत्वं प्रतिष्ठापयति। अधुनापि स्नानोत्तरं सर्वेऽपि आस्तिकभारतीयाः तमेवैकं गायत्री-मंत्रं जपित्वा स्वबुद्धेर्विकासाय भगवन्तं सवितारं प्रार्थयन्ते। किं बहुना, स्नानात्पूर्वं यदा स 'गंगे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिंधु कावेरि जलेऽस्मिन् संनिधिं कुरु।' इति मंत्रेण

जलाभिमंत्रणं करोति तदा स समस्तराष्ट्रस्यैकत्वमखण्डत्वं च परोक्ष-रूपेण दृढीकरोति। अतः सर्वथा संशयातीतमिदं वचः यत् संस्कृत-भाषा देशस्यैक्यस्य भारतीय-संस्कृतेरभिन्नतायाश्च प्रतीकरूपा। अत एवास्या भाषायाः परिपोषणं संवर्धनं, राष्ट्रसंस्कृत्योरेकत्व-भावनायाः परिपोषणं संवर्धनं चेति सर्वसम्मतम्।

सत्यप्येवंविधेऽकाट्यसाक्ष्ये केचन नवीनतापक्षपातान्धितधियः संस्कृत-भाषां मृतेत्युद्घोष्य अस्याः प्रचारमवाञ्छनीयं मन्यन्ते इति भृशं विषीदति चेतः। तेषां मनसि 'मृते' ति शब्दस्वार्थोऽतिसङ्कुचित इति मन्ये। सर्वतः प्रसरति सर्वोदयमतवादे किं महात्मा गांधी मृत इति वक्तुं शक्यते। कालधर्मेण नष्ट-शरीरा अपि पूर्वजाः जीवत्सु पुत्रपौत्रादिषु जीवन्त्येव। "आत्मा वै पुत्र नामासि" इति श्रुतया पुत्रः पितुरभिन्नः। "प्रजातन्तुं मा व्यवच्छेत्सीः" इति उपनिषद्वाक्यं स्पष्टतया सूचयति यद् अव्यवच्छिन्नतन्तु-सन्ताने पूर्वगताः तन्तवो न सर्वथा विलुप्ताः। तथात्वे तु तन्तुसन्तान एव व्यवच्छियेत। एवं च यावत्कालपर्यन्तं संस्कृतोद्भूताः संस्कृतप्रभाविताः वा विभिन्नाः भारतीय-भाषाः लोके प्रयुज्यन्ते, यावच्चास्माकं धार्मिककृत्यानि संस्कृत-मन्त्रैः सम्पाद्यन्ते, यावच्च भारतीय-संस्कृतिरात्मनोस्तित्वं जगति धारयति, तावत्-काल-पर्यन्तं संस्कृत-भाषा 'मृतेति' कथनं वदतो व्याघात एव। यथा सम्पादितशुभ-कृत्याः जनाः विनष्टेऽपि भौतिके देहे स्वयशः-कायेन चिरं जीवन्ति, एवमेव उच्चविचारप्रकाशनक्षमा अखिल-भारतीयप्रसिद्धिकामानां ग्रन्थकाराणामिमेकमात्रसाधनरूपा संस्कृत-भाषापि जीवत्येव। जनभाषा म्रियते, न बुधभाषा। उदात्त-भाव-प्रकाशनसामर्थ्यं वहन्ती, शास्त्रीय-विषयचर्चा-पटीयसी नवनवार्थजातं बोधयितुं स्वाक्षय्य-भाण्डारात् नवशब्द-निर्माणशक्तिं धारयन्ती संस्कृत-भाषा न कदापि मृतेति शब्दप्रयोगमर्हति। यावत्तिष्ठन्ति गिरयः सरितश्च महीतले। तावत् संस्कृतभाषेयं भारते प्रचरिष्यति।

उक्तमस्ति केनचित् विदुषा यत् शिक्षिताशिक्षितयोः को भेदः इति ज्ञातुं समीहा चेत् तर्हि संस्कृतभाषाभिज्ञाभिज्ञत्वं नियामकत्वेन स्वीकर्तुं शक्यते। असंस्कृतज्ञः खलु वर्तमानं क्षणिकमेव वाङ्मयं जानाति, गतकालस्य शाश्वतमूल्यभाजा वाङ्मयेन अपरिचयः तस्य दृष्टिकोणम्अव्यापकम् अनभिजातं च विदधाति। संस्कृतज्ञस्य न तथा। तस्य दृष्टिकोणे परिणत-प्रज्ञानां पुरातनग्रन्थकाराणां विचाररत्नानि अपूर्वां मूल्याङ्कन-शक्तिं प्रवर्धयन्ति। विज्ञानक्षेत्रे उत्तरकालविज्ञानं पूर्वकालविज्ञानमतिशयीत, न तथा साहित्यिकक्षेत्रे। विज्ञानक्षेत्रे साहित्यक्षेत्रे च स्पष्टोऽयं मौलिको भेदः। वाल्मीकि-काव्यगौरवं कालिदास-काव्येन, कालिदास-काव्यं वा बाणकाव्येन नातिशेतुं शक्यते। प्राचीनकवीनां प्रतिभाः तेषामनन्यजुष्टाः सम्पत्तयः। नात्रान्यः कविः भागभाग्भवितुमर्हति। वर्तते तेषां काव्यप्रतिभायां किमप्यपूर्वं वैशिष्ट्यम्, येन कारणेन प्राचीन-कवीनां महत्त्वमनन्यहार्यम्। प्रत्युत संततानुशीलते कृते प्राचीनग्रन्थाः नवनवोन्मेषं प्रदर्शयन्ति। मेघदूताभिज्ञानशाकुन्तलोत्तररामचरितकादम्बरीत्यादि ग्रन्थरत्नानि पुनः पुनः सूक्ष्ममनुशीलितानि प्रतिवारमदृष्टपूर्वं काव्यसौष्ठवं प्रदर्शयन्ति। किंच राष्ट्रभाषात्वेन स्वीकृतायाः हिन्दी-भाषायाः तत्पदे निवेशनाय संस्कृत-भाषा अत्यन्तमुपयोगिनीति सर्वैरपि स्वीकार्यम्। यतः यथा यथा हिन्दीभाषा संस्कृतनिष्ठा, संस्कृत-गर्भा वा भविष्यति, तथा तथा वर्धेतास्याः राष्ट्र-

भाषापदवहनसामर्थ्यम्। संस्कृत-भाषायाः तत्समाः शब्दा हिन्दीभाषायां बाहुल्येन प्रयुक्ताश्चेत्, सा काश्मीरप्रदेशात् कन्याकुमारीपर्यन्तं, कच्छप्रदेशात् कामरूपं यावत् समस्ते देशे सुबोधा सुशक-प्रचारा च स्यात्। तदेवमनेकायुक्तयो वर्तन्ते यत्कारणेन संस्कृतभाषाया अधिकाधिक-प्रचारः सर्वैरपि अभिलाषणीयाऽस्ति। तस्यैवाभिलाषस्य इदं मूर्त्तं प्रमाणं यत् संस्कृतभाषाध्यापकाः अत्र स्वोद्देश्यं सफलायितुं बद्धपरिकरा अवलोक्यन्ते। दृश्यते च अध्यापकेतराणामपि उत्साहोल्लास-परिप्लुतानां संस्कृतभाषानुरागिणां स्फूर्तिप्रदायकः समुदायोऽत्र सभास्थले।

परंतु एवंप्रकारेणासन्दिग्धमाहात्म्याया अपि संस्कृत-भाषाया विरल-विरल एव प्रचारोऽधुनातने काले। वर्षानुवर्षं संस्कृत-पाठशालासु आंग्ल-विद्यालयेषु च संस्कृताध्येतॄणां संख्या ह्रासं गच्छन्ती अवलोक्यते। पच्चविंशतिवर्षेभ्यः पूर्वं नागपुर-विश्वविद्यालये संस्कृतविषयं गृहीत्वा इंटर-बी० ए०-परीक्षयोः प्रवेष्टुकामानां संख्या यावती आसीत् ततोऽपि न्यूना संजातास्ति, यद्यपि विश्वविद्यालय-परीक्षार्थिनां संख्या साकल्येन चतुर्गुण-वृद्धिं प्राप्तास्ति। चतुर्दश-वर्षेभ्यः पूर्वं कतिपयेषां सुहृदां सक्रियसहयोगेन प्रवर्तितासु विश्वविद्यालयीय-प्राच्यविद्या-परीक्षासु प्रवेशार्थिनां संख्या सम्प्रति वर्षानुवर्षं न्यूनतराः संजायते। न केवलं परिमाणकृतमेव, गुणकृतमपि वैषम्यं चेतसि महान्त खेदमावहति। अद्यतनेषु संस्कृतज्ञेषु प्रौढिः, विषयप्रवेशः वाक्पाटवं च अपवादेष्वेव लभ्यन्ते। तथैव साम्प्रतिके काले मध्यप्रदेशस्य विभिन्नस्थानेषु संस्कृत-पाठशालाः आवश्यक-सहायताया अभावे कथंकथमपि प्राणान् धारयन्ति। पुरा अन्नवस्त्र-पुस्तकादीनां निःशुल्कप्रदानेनोत्साहिताः छात्राः पर्याप्तसंख्यायां संस्कृतभाषामधीयते स्म। विद्याभ्यासेन च अन्नप्रदातुः वदान्यस्य 'दश पूर्वान्' 'दशापरान्' पुण्यभाजः कुर्वते स्म। इदानीं तु अन्नवस्त्रमहर्घतया वदान्यता प्रतिदिनं संकुचिततरा भवन्ती अवलोक्यते। संस्कृतभाषाध्ययने श्रद्धादराभाव इदानीं तथा वर्धमानो विलोक्यते, यथा संस्कृत-विदुषामपि अपत्यानि सत्यर्थ-सामर्थ्ये आंग्लभाषामेवाधीयते, संस्कृत-भाषा तु अनन्यगतिकैरेव निर्धनैश्छात्रैः पठ्यते। न चेद-मस्ति अहेतुकम्, यतः संस्कृतभाषाध्ययते आजन्म दत्त-मनोऽवधाना अपि संस्कृतज्ञा विद्वांसः पूर्वकालीनप्रतिष्ठासमादरौ तु दूरे नाम, जीवनयात्रामपि स्वातन्त्र्येण वोढुमक्षमा भवन्ति। तदे-वंविधे वर्तमाने महत्यनर्थप्रत्यूहादिसमुदायेऽत्रोपस्थितानां समेषां संस्कृत-भाषानुरागिणामिदं कर्तव्यपथमवतीर्णं वर्तते यद् इयं दुरवस्था शीघ्रातिशीघ्र खपुष्पायिता विधेया, संस्कृत-भाषा च पुनः आत्मीयां भुक्तपूर्वां प्रतिष्ठां समलंकुर्यात्।

अस्यां दिशायामपेक्ष्यमाणाः प्रयत्नाः द्विविधाः सन्ति। स्वावलम्बनाधिष्ठिताः पराव-लम्बनाधिष्ठिताश्च। तत्र पूर्वमाद्यानां विचारः प्रस्तूयते। संस्कृताध्यापकैरिदानीं तथा प्रयत-नीयं यथा छात्रा अध्ययने गाम्भीर्यं सम्पादयेयुः, तेषां ज्ञानं परिपुष्टं सन्देहातीतं प्रकर्षाधायकं च स्यात्। पल्लवग्राहिपाण्डित्यं न कदापि शोभाधायकं पाश्चात्यप्रणाल्या कृताध्ययनेषु छात्रेषु, प्राचीनपरिपाट्या सम्पादितविद्येषु वा। अत्रेदमपि अवधेयम्, यत् प्राचीनकाले संस्कृतज्ञाः विद्वांसोऽल्पसंख्यकानेव ग्रन्थान् पठन्ति स्म, अल्पक्षेत्र-परिमितमेव ज्ञानमुपार्जयन्ति स्म। परन्तु यदेव ते जानन्ति स्म, तत्साधु जानन्ति स्म। ज्ञातः अज्ञातः वा इत्येवंविध एव शास्त्रीयविषयः आसीत्। अर्ध-ज्ञातः अथवा अपूर्ण-ज्ञातो विषयो नासीदेव। केवलं सिद्धान्तकौमुदी न्यायमुक्तावली

साहित्यदर्पणं च एतद्ग्रन्थत्रयं सम्यगभ्यस्य यन्मौलिकं पाण्डित्यं यञ्च विषये गहन-प्रवेश, यावन्तञ्ज ज्ञानातिशयं ते सम्पादितवन्तः, तत्सर्वमिदानीं दुर्लभं-जातमस्ति। महाकवि माघेन उचितमेवोक्तमस्ति——

स्पृशन्ति शरवत्तीक्ष्णाः स्तोकमन्तर्विशन्ति च।
बहुस्पृशापि स्थूलेन स्थीयते बहिरश्मवत्॥

शरः खलु अल्पमेव स्पृशति, परन्तु अन्तः प्रविशति। पाषाणो बहुप्रदेशं व्याप्नोति, किन्तु बहिरेव तिष्ठति अन्तः प्रवेशः तेन दुःशक एव। किन्तु नेदमेव पर्याप्तम्। अर्जितंज्ञानं यथा असन्दिग्धं पूर्णं च अपेक्षितं, तथैव व्यापकं साकल्ययुक्तमपि अपेक्ष्यते। ज्ञानक्षेत्रे जलराशौ इव मर्यादाकरणं सीमाविभाजनं वा दुःशकम्। एकाङ्गिज्ञानं नैव कदापि प्रशंसामर्हति। कूपमण्डूकता सर्वथा परिहेया। अतः ज्ञानस्य असन्दिग्धतया सह साकल्यमपि मनोनिवेशेन सम्पादनीयमिति संस्कृतज्ञान् प्रति मे विनम्रा प्रार्थना।

कतिभ्यश्चित वर्षेभ्यः पूर्वं संस्कृतज्ञसमाजे दृश्यमानम् अत्यावश्यकं परम्पराद्वयम् इदानीं विलीनमपि जातमस्ति। तत्र प्रथमा शिक्षणपरम्परा, 'चिन्तानां' इति शब्देनाभिधीयते। उच्च-कक्षास्थाः छात्राः निम्नकक्षास्थ-छात्रान् गुरूपदेशमनुकृत्य पाठयन्ति स्म। एवंरीत्या अध्ययनेन सह अध्यापनकलापि समर्ज्यते स्म। अस्यां परम्परायां 'शिक्षणशास्त्रस्य' ट्रेनिंग इत्यस्य पार्थ-क्येन आवश्यकता नासीत्। अधीयमानश्छात्रः अध्ययनकाले एव अध्यापनानुभमवपि सम्पाद-यति स्म। एतस्याः प्रथायाः प्रसारः प्रवर्धनीयः। अपरा परम्परा 'शास्त्रार्थ' शब्देनाभिधीयते स्म। यद्येषा परम्परा सविधि नियमेन च परिपाल्यते, तर्हि छात्राणां शास्त्रार्थ-विचारे बुद्धितैक्ष्ण्य-सम्पादने, वाक्पाटवार्जने च महत्सौकर्यं स्यात्। विषयप्रतिपादनकलायां नवनवोन्मेषशालि-प्रतिभा-संवर्धने च 'शास्त्रार्थ'—परम्पराया अतीव वैशिष्ट्यम्। नागपंचमी-दिवसे यथा ग्रामस्य तरुणाः मल्लविद्यायाम् आत्मनः नैपुण्यप्रदर्शनेऽहमहमिकां प्रदर्शयन्ति, तथैव तस्मिन् दिने वारा-णस्यां प्रतिमन्दिरं शास्त्रार्थकलाभ्यास-नैपुण्यं प्रदर्शयन्तः छात्राः संस्कृतभाषां सप्राणां सबलां च कुर्वन्ति स्म। अधुनातने काले परम्परेयम् 'अशिष्टे' त्युद्घोष्य तिरस्क्रियते इति महाननर्थः। शिक्षासंस्थासु वादविवादो यथा नानिष्टो मन्यते, भिन्नावसरेषु संस्कृताध्येतारः सनियमं 'शास्त्रार्थ' करणार्थमुत्तेजनीया इति मे मतिः। प्राचीनपरम्परासु अस्ति किमप्यपूर्वं वैशिष्ट्यमिति न विस्मरणीयम्।

संस्कृतविद्याप्रवर्धनार्थं संस्कृतज्ञैः स्वयं क्रियमाणेषु प्रयत्नेषु शुद्धोच्चारण-विषयकः प्रयत्नो-ऽप्यतीव आवश्यक इत्यहं मन्ये। अस्मिन् विषये माहाराष्ट्राः विद्वांसः सर्वथा अभिनन्दनीयाः। तैः बाल्यकालादेव वर्णानां शुद्धोच्चारणे मनोयोगो दीयते। अत एव तत्र वकारबकारयोः सकार-शकारयोश्च भेदः सम्यग्ज्ञातः स्पष्टश्च दृश्यते। वेदा न कदापि बेदाः, चतुर्वेदी चतुर्वेदी एव अभिधीयते न चतुर्बेदी, शरवाचको महाकविवाचकश्च वाण-बाणशब्दौ न कदापि एकरूपौ भवतः। एवमेव 'शान्ताकारो भुजगशयनः 'सान्ताकारो भुजगसयनः' न श्रूयते। मूर्धन्यषकारोच्चारणेऽपि तथैव कण्ठ्यखकाराद् भेदः स्पष्टीकरणीयः। अन्यथा "ष्टुना ष्टुः" इति पाणिनीयसूत्रं 'खटुना खटुः' इति विकृतरूपं स्यात्। याज्ञवल्क्यशिक्षायां यकारषकारयोरुच्चारणविषये प्रदत्ता नियमा

यजुर्वेदमन्त्राध्ययनकाले एव परिपालनीयाः, न लौकिकसंस्कृतभाषाशब्दोच्चारणे। उत्तर-भारतीयाः संस्कृतविद्वांसो विशेषतः सावधाना भूत्वा यदि वर्णानुच्चारयेयुः, तर्हि व्याकरणाध्ययनस्य तेषु अधिकप्रचारेण तैरुच्चारणशुद्धिः सौकर्येण सम्पादयितुं शक्यते इति मे साक्षादनुभवः।

इदानी परावलम्बनाधिष्ठितानां प्रयत्नानां निर्देशः क्रियते। अतिखेदावहेयं वस्तुस्थितिः यद् अस्माकं मध्यप्रदेशे राजकीयसाहाय्यं प्राचीनपरिपाट्या संस्कृतभाषाध्यापनविषये सर्वथा अभावात्मकत्वमेव। प्रतिवेशिप्रान्तेषु यथा उत्तरप्रदेशे, विहारप्रान्ते, वङ्गप्रान्ते किं बहुना उत्कलासमप्रान्तयोरपि, प्रशासनेन महत्साहाय्यं क्रियते। तत्तत्प्रान्तानामायव्ययपत्रके प्रतिवर्षम् अनेकलक्षमुद्राणां समावेशो दृश्यते। गते मासे पठितं स्याद् भवद्भिः यद् उत्तरप्रदेशे एकविंशतिलक्षाणि, विहारप्रदेशे उपदशलक्षाणि, मद्रासप्रान्ते आसन्नपञ्चलक्षाणि संस्कृतभाषासंवर्धनार्थमागामिनि संवत्सरे व्ययीकरिष्यन्ते इति। उत्तरप्रदेशेऽधिगताखिलभारतीयकीर्तिः संस्कृतमहाविद्यालयः साकल्येन राजकीयः सन्नेव वेदेषु शास्त्रेषु च अध्यापनप्रबन्धं कर्तुं क्षमः। उत्तरप्रदेशप्रशासनमेकशताधिकाः संस्कृतपाठशालाः आर्थिकसाहाय्येनोपकृताः करोति। संस्कृतपाठशालीय-कार्याणां निरीक्षणाय तत्र 'इंस्पेक्टारेट' (निरीक्षणविभागः) संस्थापितो वर्तते। एवमेव अन्य-प्रान्तेष्वपि विभिन्न-मात्रासु राजकीयसहायता प्रदीयते। गतवर्षे मईमासे उत्तरप्रदेशस्य शिक्षामन्त्रिणा भारतवर्षस्य विभिन्नप्रान्तेभ्यो विश्वविद्यालयेभ्यश्च संस्कृतविद्यायाः प्रतिनिधयः समाहूता आसन्। तत्र मध्यप्रदेशप्रशासनस्य नागपुर विश्वविद्यालयस्य च द्वौ प्रतिनिधी समुपस्थितौ। तस्मिन् सम्मेलने ऐकमत्येन संस्कृतपरीक्षाणां प्रामाणिकीकरणविषयकः समीकरणविषयकश्च प्रस्तावः स्वीकृतो जातः। बम्बईप्रशासनं तत्प्रस्तावानुरोधेन संस्कृतभाषासंरक्षणप्रवर्धनार्थम्-उपसमितिमेकां निर्ममे, यस्या उपदेशेन-इत्थं श्रूयते यत्, शीघ्रमेव बम्बईप्रान्ते चतुर्णां राजकीयसंस्कृतविद्यालयानां संस्थापनसम्बन्धे, प्रचलितसंस्कृतपाठशालाभ्य आर्थिकसाहाय्यप्रदानसम्बन्धे च सक्रियविमर्शः प्रवर्तते। मध्यप्रदेशस्य प्रशासनेनास्मिन् सम्बन्धे किं विधेयमिति संस्कृताध्यापकसङ्घेन विचार्यमाणविषयेषु अन्तर्भावयिष्यत इत्यहं मन्ये। परीक्षाणां पाठ्यक्रमे किं परिवर्तनमपेक्ष्यते, कथं च संस्कृताध्ययनस्य आधुनिकीकरणं सम्पादनीयमित्यपि विचारार्हम्। एतत्कृते राजकीयवर्गस्य नेतृत्वं कियदपेक्ष्यते, शिक्षाक्रमे संस्कृतभाषायाः कि स्थानं स्यात्, शिक्षासंस्थासु राजकीयसेवासु च संस्कृतविदुषां क उपयोग इत्यादीनां बहुविधानां प्रश्नानां समाधाने जाते एव संस्कृत-शिक्षापद्धतिः निर्धारयितुं शक्यते। आंग्लभाषाध्ययनस्य वैकल्पिकत्वे जाते संस्कृतभाषाया अधिकाधिकाध्ययनं प्रवर्तेत इति सर्वथा स्वाभाविकम्। किन्तु तदर्थं संस्कृताध्यापनस्य प्रकारः कथं कियद्वा परिवर्तनीयः इति विमर्शार्हम्। आवश्यकतानुसारम् आविष्कारा जायन्ते इति सर्वथा अबाधितः सिद्धान्तः। एवमेव, प्रचलितानां संस्कृतपाठशालानां दयनीया **स्थितिः** शीघ्रातिशीघ्रं दूरीकरणीया। पारतंत्र्यकाले प्रशासनस्य संस्कृतशिक्षां प्रत्यौदासीन्यं कथंचित् क्षम्यमासीत्। सांप्रतं तु राष्ट्रियप्रशासनस्येदमाद्यं कर्तव्यं यत् संस्कृतविद्याप्रचारः समुन्नेयः, प्राचीनपाण्डित्यस्य संरक्षणं विधेयम्। हर्षावहमिदं यद् अस्माकं शिक्षामन्त्रिणो नास्मिन् विषये उदासीनाः। प्रान्तीयव्यवस्थापकसभायां गतमासे एव तैः संस्कृतविद्या-प्रोत्तेजनार्थमाश्वासनं

प्रदत्तम्। लघुराज्यानां विलयने जाते, जमीदारी-प्रथायाश्च उन्मूलने कृते, प्रान्तीयप्रशासनस्य गले पतितोऽयं भारः सर्वथा प्राथम्यमर्हति। संस्कृत-पाठशालानामार्थिकस्थितौ सम्पन्नायां, शिक्षाक्रमे च कालानुरूपं परिवर्तिते सति, पाठशालीयाश्छात्रा अपि संस्कृतविद्यां सम्यगभ्यस्य देशहितकार्येषु आत्मानं प्रवर्तयेरन्। विगलितायां पारतन्त्र्यशृंखलायां प्रवर्तमाने च स्वायत्त-शासने, संस्कृतविद्वांसो नेदानीमकर्मण्या उदासीनाश्च भवितुमर्हन्ति। राष्ट्रकल्याणाय तैः किं कर्तव्यमिति निश्चित्य संस्कृतभाषाया उन्नयनार्थं प्रयत्नो विधेयः। तदर्थं तेषां कीदृशं योग्यतावर्धनमपेक्ष्यते, कथं च तेषामधिकोपयोगित्वं सम्पाद्येतेति अनेकेषामावश्यकविषयाणां विमर्शे भवतां साफल्यं समीहमानः पुनरप्यन्तेऽध्यक्षीयभाषणावसरप्रदानेन मयि यमनुग्रहं प्रदर्शितवन्तस्तदर्थं कृतज्ञताभावं प्रकाशयन् विरमामि।

**[ १५५१ मिते ईशवीय वर्षे मध्यप्रदेशीय-संस्कृताध्यापक संघस्य पञ्चमेऽधिवेशने अध्यक्षीयभाषणम् ]**

---

[पृष्ठ २१ तः]

कृते विशिष्टानि सस्वरमुद्रणाक्षराणि क्रीत्वा अल्पव्ययेनैव कृच्छ्रसाध्यं संस्कृतग्रन्थमुद्रणमङ्गी-कृतमिति प्रशंसनीयं तेषां संस्कृतविद्याप्रेम। तदियं सभाष्यवैदिकसूक्तमुक्तावली भगवतो वेदस्य कृपया वेदाध्ययनाध्यापनप्रचारे साहाय्यं विदधती विद्यार्थिजनानामावश्यकतां पूरयेत् इत्याशास्ते।

**(१९९८ वैक्रमसंवतसरे वैदिकसूक्तावलीनामकस्य नागपुरे प्रकाशितस्य पुस्तकस्य भूमिकारूपमिदं लिखितम्।)**

# १०. संस्कृतभाषायाः राष्ट्रभाषात्वम्

अमृतपानाद् नितरां उद्विग्नः शङ्करः यथा विषपानं कृत्वा आनन्दं प्राप, तथैव नाना-विधमनोरञ्जककार्यक्रमानन्तरं संस्कृतभाषायां व्याख्यानं कारयतः धर्मपेठ सार्वजनिक-गणेशमंडलस्य स्वादपरिवर्तनेन आनन्दप्राप्तौ प्रयत्नः इति मन्ये। प्रथमतः तावद् संस्कृतभाषायां व्याख्यानं कर्तुं विद्यते मे भयम्। अधुना सर्वेभ्योऽपि यथापूर्वं संस्कृतभाषा न रोचते। पाठशालासु संस्कृत-भाषाछात्राः न्यूनसंख्याःऽसंस्कृतभाषायाः नामैव श्रुत्वा ते गृहीतभया इव तस्याः दूरं पलायन्ते। द्वितीयतश्च को नाम व्याख्याता। महाविद्यालये 'टिड्ढाणञ्' इत्यादिकटुशब्दैः कुंठितमतिः वेदाभ्यासजडः कोऽपि। न मयि रसालवाणीकत्वं संभवति। तथापि व्याख्यातुम् आज्ञप्तः एक वक्तुम् उत्सहे। तृतीयतश्च को नाम विषयः। संस्कृतभाषायाः राष्ट्रभाषात्वम्। "इयं भाषा न अखिलस्य राष्ट्रस्य। किन्तु केषांचन पंडितानाम्। राष्ट्रन्तर्गता वयं न तां बोद्धुं शक्नुमः। अतः कथं सा राष्ट्रभाषा भवेत्" इति कश्चिद् वदेत्।

एतस्मात् दोषत्रयकारणात् भीतः अहम्। अतः तस्याएमेव भाषायां ब्रवीमि या अत्रो-पस्थितानां सज्जनानां मध्ये सर्वैरपि बोध्या भवेत्, यथा च सा समासबहुला क्लिष्टा च न भवेत्। अन्यथा यस्यां भाषायां व्याख्यानस्य अवबोधः अपि न भवेत् सा कथं राष्ट्रभाषा भवति।

## 'राष्ट्रभाषा' पदस्य अर्थः

"संस्कृतभाषायाः राष्ट्रभाषात्वम्" इति विषये प्रथमं ताबद् "राष्ट्रभाषा" इति पदस्य पूर्वं विचारः कर्तव्यः। तत्रापि प्रथमं "राष्ट्र" पदस्य विचारः। इदं एकं राष्ट्रं इति प्रथमः विचारः। यदि इदं एकं राष्ट्रं न, तर्हि न संभवति राष्ट्रभाषायाः प्रश्नः। 'राष्ट्रभाषा' पदस्य राष्ट्रस्य भाषा राष्ट्रभाषा इति विग्रहः। न राष्ट्राणां राष्ट्रयोः वा भाषा इति। अतः इदं स्वी-कर्तव्यं यद् इदं एकं राष्ट्रं इति। पूर्वकाले आसीत् खलु इदं एकं राष्ट्रम्। किन्तु अधुना तु तद् अर्ध-राष्ट्रं जातम्। 'आसिन्धु सिन्धुपर्यन्तं' एतद् राष्ट्रम्। किन्तु द्वितीयः सिन्धोः नाम अपि न विद्यते अस्मिन् राष्ट्रे। कस्यचन अपि मंगलकार्यस्य प्रारंभे 'जम्बूद्वीपे भरतखण्डे' इति मन्त्रः उच्यते। न खलु भरतखण्ड खण्डे। उत्तरस्यां दिशि काश्मीरं, दक्षिणस्यां दिशि कन्याकुमारी, पूर्वस्यां दिशि कामरूपं, पश्चिमस्यां दिशि कच्छं इति चतुर्भिः ककारैः आवेष्टितं इदं एकं राष्ट्रम्। तत्र वर्तमानाः सर्वे वयं एकराष्ट्रनिवासिनः इति कल्पना न कदापि विस्मर्तव्या। ततः एव राष्ट्रस्य भाषा इति समासः साधुः भवति।

## भारतस्य भाषाणाम्-उद्गमस्थानम्

अथ एकं राष्ट्रं इदम्। तस्य का भाषा इति विचारणीयम्। इदं अपि विचारणीयं यत्

किमेतद् नितरां आवश्यकं यद् राष्ट्रस्य एका एव भाषा स्यात्। न द्वे, तिस्रो वा। अस्य सुयोग्यं उत्तरं तु एतदेव भवति यद् राष्ट्रस्य एका एव भाषा स्यात्। अस्माकं नेतृभिः हिन्दी-हिन्दुस्थानी इति द्वे भाषे राष्ट्रभाषारूपेण निश्चिते। उर्दूभाषायाः राष्ट्रभाषात्वे न कोऽपि सम्मतिं ददाति दातुं अर्हति वा। अस्मिन् अवसरे अस्माकं राष्ट्रस्य भौगोलिकः परिचयः आवश्यकः। त्रिधा विभक्तः अयं देशः। उत्तरापथः, दक्षिणापथः, मध्यदेशश्च इति। उत्तरभारते अनेकाः प्रान्तीय-भाषाः। समृद्धं च तासां साहित्यम्। अस्माकं पूर्वस्यां दिशि बंगाली भाषा। तस्याः साहित्यं तथा भूतं यत् तस्याः गौरवं कर्तुं ते अर्हन्ति। रवीन्द्रसदृशाः कवयः, शरच्चन्द्रादयः उपन्यासकाराः तस्याः भाषायाः वाङ्गये जाताः। एवमेव पश्चिमस्या दिशि गुजराती, महाराष्ट्रे मराठी, उत्तरे भारते हिन्दी। उत्तरस्यां दिशि एकस्याः हिन्दीभाषायाः अपि स्वरूपं न एकविधम्। तस्याः यादृशं स्वरूपं विहारप्रान्ते न तादृशं युक्तप्रांते।

सर्वाः अपि एताः भाषाः आर्यवंशोद्भवाः। सर्वासां आसां उद्गमः संस्कृतभाषायाः एव। यदि एताभ्यः भाषाभ्यः संस्कृतभाषायाः शब्दाः बहिष्क्रियन्ते तर्हि तासां विलोपः स्यात्। इयत् परिमाणं विद्यते संस्कृतभाषायाः शब्दानां आसु भाषासु।

दक्षिणभारते अन्या एव स्थितिः दृश्यते। ताः न आर्यवंशोद्भवाः किन्तु द्राविड़वंशोद्भवाः। तथापि संस्कृतभाषायाः प्रभुत्वं संस्कृतशब्दानां बाहुल्यं च तासु अपि दृश्यते। तथा हि तेलगुभाषायां ०% संस्कृतभाषायाः शब्दाः, कन्नड़भाषायां ७५% मल्यालम्भाषायां ८०% संस्कृतशब्दाः। केवलं तामिल भाषायां अस्याः प्रभावः अल्पतमः। तस्यां केवलं १०% संस्कृत-भाषायाः शब्दाः विद्यन्ते।

एताः याः भाषाः विद्यन्ते तासु विद्यमानानां शब्दानां त्रयो भेदाः। केचन शब्दाः तत्समाः, केचन तद्भवाः, केचन च देशीयाः। संस्कृतभाषायाः यथास्थितं तथा आगताः शब्दाः तत्समाः, यथा सार्वजनिक, मण्डल, उत्सव इत्यादयः। संस्कृतशब्देभ्यः उद्भूताः तद्भवाः यथा 'आज' इति शब्दः 'अद्य' इति शब्दत् उद्भूतः। देशीयशब्दास्तु कुतः आगतः इति न ज्ञायते। इदानीं एतासु सर्वासु भाषासु यथा तत्समशब्दानां तद्भवशब्दानां च आधिक्यं न तथा देशीयशब्दानाम्।

## राष्ट्रभाषात्वे सामर्थ्यम्

इदानीं तु इदं विचारणीयं यत् किं वर्तते संस्कृतभाषायां तादृशं सामर्थ्यं राष्ट्रभाषा भवितुम्। वैज्ञानिकं इदं युगम्। अस्मिन् युगे शास्त्राणां ज्ञानं प्रतिदिनं परिवर्धमानं दृश्यते दिने दिने नूतनाः आविष्काराः आविर्भवन्ति। तेषां कृते के शब्दाः ग्राह्याः किं आंग्लभाषायाः शब्दाः साक्षात् प्रयोक्तव्याः। यदि ते तथैव प्रयोक्तव्याः तर्हि महती अनवस्था स्यात्। प्रान्तीय-भाषासु तेषां अर्थे न समीचीनाः शब्दाः। लोकभाषासु आंग्लशब्दाः एव तेषां रूपपरिवर्तनेन (यथा Ticket इति स्थाने तिकिट) वर्तन्ते। किन्तु न शास्त्रीयग्रन्थेषु तेषां प्रयोगः योग्यः। आंग्लभाषायाः Law bylaw, order, ordinance, rugulation इत्येतेषु शब्देषु भिन्नाः भिन्नाः भावच्छटाः वर्तन्ते। न एकेनैव शब्देन तादृशानां छटानां अनुवादः भवति। न च प्राकृतभाषासु अनुवादस्य सामर्थ्यम्। तर्हि कस्याः भाषायाः समाश्रयणेन एतेषां अनुवादः

कर्तव्यः। अत्र संस्कृतभाषा एवं अस्मभ्यं साहाय्यं ददाति। तथाहि Saw=न्यायः, bylaw= उपनियमः, order=आज्ञा, ordlnanēe=सद्यःशासनम्, rule=नियमः, regulation नियमनम् एवं प्रकारेण दीयन्ते तेषां पर्यायशब्दाः। संस्कृतभाषायां उपसर्गयोगात् धातूनां अर्थः भिन्नः भवति। उपसर्गाणां सद्भावात् अस्यां भाषायां, यावन्तः जगति अर्थाः विद्यन्ते ते सर्वे शब्दैः प्रकटीक्रियन्ते। यथा 'हृ' धातोः भिन्नानां उपसर्गाणां प्रयोगेण भिन्ना अर्था भवन्ति। यथा हारः, आहारः, संहारः, परिहारः, इत्यादयः। तथैव भिन्नानां उपसर्गाणां प्रत्ययानांच प्रयोगे भिन्नाः, अर्थाः भवन्ति, चिन्ता पदे चिन्त् धातुः तस्य धातो अर्थः (Thtnk) किन्तु 'चिन्ता' शब्दस्य अर्थः (omyiety) न विचारः (thinking)। तस्मिन् अर्थे चिन्तनं इति शब्दस्य प्रयोगः कर्तव्यः। एतादृशं सामर्थ्यं अस्माकं गीवार्णमाषायाः। संसारे अस्मिन्सः अर्थः एव न अस्ति यस्मिन्न शब्दः अस्यां भाषायां न लभ्यते। या भाषा जीवमाना तस्यां भाषायां नूतनाः शब्दा आगच्छन्ति नूतनानां भावानां कृते नूतनाः शब्दः निर्णेयाः। सर्वाः प्रान्तीयभाषाः अधमर्णाः याः स्वयं अपरेभ्यः ऋणं गृह्णन्ति। कथं ताः अन्यस्मै प्रयच्छन्ति। एतस्माद् विवेचनाद् इदं सुनिश्चितं यद् इयं भाषा नूतनशब्दनिर्माणे क्षमा। अतः तस्याः राष्ट्रभाषात्वे भवति योग्यता।

## अस्माकं धर्मभाषा

द्वितीयं कारणं यद् इयं अस्माकं धर्मभाषा। एतद्देशनिवासिनां ये संस्काराः क्रियन्ते तेषु अस्याः एव प्रयोगः क्रियते। काश्मीरकेरल-कामरूपकाठियावाडादिषु सुदूरदेशेषु अपि यदि विवाहः क्रियते तर्हि 'हस्तं गृभ्णामि ते सौभगत्वाय' इत्येषः एव मन्त्रः प्रयुज्यते। एवंभूतेन विधिना कृताः विवाहाः वधाः। प्रतिदिनं प्रातःसन्ध्यादौ संस्कृतभाषा एव प्रयुज्यते। न मराठी, न वा आंग्लभाषा। इमां एव आश्रित्य सर्वाणि धर्मकर्माणि क्रियन्ते। अतः इयं अस्माकं धर्मभाषा।

आयुषः अन्तकाले कीदृशं आदर्शं नरः स्वस्य पुरः स्थापयति। सः चतुर्धामयात्रां कृत्वैव आत्मनो जीवितं सार्थकं मन्यते। किं कारणमस्य। अस्य कारणं तु यत् इदं एकं अस्माकं राष्ट्रम्। इयं अस्माकं पुण्यभूमिः। अस्याः पुण्यभूमेः ऐक्यं तदैव प्रतिष्ठितं भवति यदा तस्यां एका एव भाषा स्यात्। युरोपमहादेशे सर्वे देशाः क्रिश्चनधर्मावलम्बिनः। तत्र संस्कृतेरपि ऐक्यं विद्यते। तत्र धर्मस्य ऐक्येऽपि, संस्कृतेः ऐक्येऽपि कथं तत्र विरोधः, कथं वा अल्पकाले द्विवारं युद्धप्रसङ्गः। एकमात्रं तस्य कारणम् भाषाभेदः इति। भाषाभेदेन भिन्नः तेषां दृष्टिकोणः। यदि तादृशी व्यवस्था अत्र आनेतव्या तर्हि भवन्तु नाम प्रान्तीयभाषाः राष्ट्रभाषाः। तथा सति हि बंगाल-प्रान्तस्य सेना अत्र आगमष्यति। अत्रत्या च दिल्लीं आक्रंस्यति। अतः भाषायाः ऐक्यं नितरां आवश्यकम्। तदैव संपूर्णस्य राष्ट्रस्य ऐक्यं संस्थापयितुं शक्यते। इदं ऐतिहासिकं सत्यम्।

## किमेतत् प्रतिगमनम्

अत्र प्रश्नः एकः समुद्भवति। कथं एते मराठीगुजरातीहिन्दीबंगालीत्यादयः भेदाः जाताः। तथा हि संस्कृतात्-पाली प्राकृतम्, प्राकृतात् अपभ्रंशः, तस्मात् अद्यतनाः भाषाः। यदि प्रकृते।

एव एतद् परिवर्तनं जातं, तर्हि प्रकृतिविरुद्धं गमनं स्यात् एक भाषाग्रहे। अतः अनुचितं एतत् प्रतिगमनम्।

न दुष्करं अस्य उत्तरम्। यदि भारतीयेति हासस्य सम्यक् निरीक्षणं क्रियते तर्हि इदं दृष्टिगोचरं भविष्यति यद् यद्यपि भाषायाः प्रवाहे वहवः भेदाः समभवन् तथापि अन्ते ते एतामेव भाषां समाश्रयन्ते स्म। तथा हि पालीभाषायां गौतमबुद्धेन स्वधर्मप्रचारः कृतः। यतः तस्मिन् काले सा एव भाषा जनैः बोध्दुं शक्या आसीत्। किन्तु गुप्तकाले ते एव बौद्धाः पालीं परित्यज्य स्वधर्मग्रन्थान् अस्यामेव भाषायां निर्मितवन्तः। मागधीप्राकृतभाषायां जैनधर्मग्रन्थाः पूर्वं लिखिताः। किन्तु तदनन्तरं अस्यां एव भाषायां ते स्वग्रन्थान् लिखितवन्तः। मुस्लिमशासनकाले अपि ये ग्रन्थकाराः जाताः ते अस्यां एव भाषायां स्वरचनाः रचितवन्तः। अपि च प्रान्तीव-भाषालेखकानां कीर्तिः तेषां प्रान्ते एव परिमिता विद्यते। ज्ञानेश्वरः ज्ञानेश्वरीं मराठीभाषायां रचितवान्। तुलसीदासः रामचरितमानसं हिन्दीभाषायां रचयाभास। अतः न महाराष्ट्राद् बहिः ज्ञानेश्वर्याः, उत्तरभारतात् बहिः रामचरितमानसस्य प्रचारः। भवद्भिः श्रुतं स्यात् कस्यचन सुब्रह्मण्यकवेः सम्बन्धे अस्माकं गव्हर्नरजनरलमहोदयः राजाजीमहाभागैः दत्तं व्याख्यानम् अपरं एतस्मात् व्याख्यानात् पूर्वंतस्य नामापि न अस्माभिः ज्ञातम्। तस्मिन्नेव प्रदेशे शंकराचार्यः रामानुजाचार्यश्च जातौ। तयोः ग्रन्थानां निखिलेऽपि भारते प्रचारः अवलोक्यते। केन कारणेन एतद् जातम्। ते ग्रन्थाः गीर्वाणभाषायां लिखिताः इत्येव तेषां प्रचारस्य कारणम्। यद् ज्ञानं तत्प्रान्तनिवासिनां कृते भवति, भवतु नाम तस्य प्रकाशनं तस्य प्रान्तस्य भाषायाम्। किन्तु यद् यद् अपूर्वं अमूल्यं ज्ञानं, यद् अन्येभ्योऽपि देयं, तस्य महार्हस्य ज्ञानस्य प्रचारार्थं संस्कृतभाषायाः एव आश्रयः कर्तव्यः।

## भाषाकाठिन्यम्

अस्त्यत्र अपरं विरोधकारणम्। अतिकठिना दुर्बोधा च इयं भाषा। कथं सा राष्ट्रभाषा भवति। निपुणं विचार्यमाणे तथाकथितं काठिन्यं अपि नष्टं भवति। नितरां विकासक्षमा इयं भाषा। काले काले अस्याः रूपं भिन्नं आसीत्। वेदकालीनभाषायाः पाणिनेः भाषा भिन्ना। पाणिनीयभाषातः कालिदासकालीना भाषा भिन्ना। तस्याः भिन्ना इयं भाषा, या मया अद्य प्रयुज्यते। किन्तु भिन्नरूपा अपि एका एव सा भाषा। इयं भाषा संस्कृता। संस्कृता नाम कृतसंस्कारा। यस्यां भाषायां कृतसंस्काराणां शब्दानां प्रयोगः क्रियते सा संस्कृतभाषा। संस्कारं विनानकोऽपि शब्दः अत्र प्रयोक्तव्यः। एते संस्काराः व्याकरणेन क्रियन्ते। यदि स्वस्वभाषायां प्रावीण्यं संपाद्यते तर्हि दूरतः एव पलायेत संस्कृतभाषायाः काठिन्यम्। यतः प्रान्तीयभाषासु ये शब्दाः बाहुल्येन भवन्ति, तेषामेव शब्दानां कृते ससंस्कारे प्रयोगे सस्कृतभाषा भवति। संस्कारे कृते सति ते शब्दाः संस्कृतभाषायां प्रयोगं अर्हन्ति। एवं प्रान्तीयभाषाः एव राष्ट्रभाषायां परिवर्तयितुं शक्यन्ते, संस्कारयोगात्। एवं कृतसंस्कारा संस्कृतभाषा राष्ट्रभाषा भवितुं अर्हति ।।इति।।

**[नागपुरे धर्मपीठ-सार्वजनिक गणेशोत्सवे (२००५ वैक्रमसंवत्सरे) कृतं भाषणम्। प्रकाशितं "युगधर्म"– साप्ताहिके आश्विन-कृष्णाष्टम्याम्]**

# ११. हिन्दुत्वं संस्कृतिश्च

अद्य अस्मिन् अवसरे भाषणं कर्तुमाहूतः अहम्। परमत्र भवतामाशा कियत् पूरीक्रियते इत्यस्मिन् विषये सन्देहः मे मनसि। मदीया भाषा न अलंकृता न वा मधुरा यथा आलंकृता राजवधूः मनोरमा, तथा न मदीया भाषा। नारङ्गफलानि विक्रीणानां मार्गात् मार्गं संचरन्ती सामान्य स्त्री इव मे भाषा। सा इव मे भाषा अपि कार्यक्षमा, जनोपयोगिनी च।

## 'हिन्दु शब्दस्य' मूलम्

हिन्दुत्वं संस्कृतिश्च इति विषयः मया गृहीतः। हिन्दुत्वं नाम किमिति विचारावसरे हिन्दुशब्दो विचारणीयः। अयं हिन्दुशब्दःन स्वदेशीयैः किन्तु परदेशीयैः अस्मत्कृते रचितः। सिन्धोः अस्मिन् तीरे वर्तमाना वयं सिन्धोः परस्मिन् पारे वर्तमानानां दृष्टया सिन्धुपारीणाः जाताः। तदनन्तरमेकदेशग्रहणात् सिन्धुपारीणाः इति शब्दस्य स्थाने सिन्धवः इत्येव शब्दरूपमवशिष्टम्। तेषां विदेशीयानां भाषायां सकारस्य स्थाने हकारः भवति। ततः सिन्धवः वयं हिन्दवः जाताः एवं च हिन्दुशब्दस्य प्रयोगः रूढः।

श्रीसावरकरमहोदयैः कृतायां हिन्दुशब्दस्य व्याख्यायां 'पितृभूः पुण्यभूःश्च' इति शब्दौ स्तः। विशिष्टस्य धर्मस्य अवलम्बिभिः एव इयं भूमिः पितृभूः पुण्यभूश्च मन्येत। तथापि मौलि कार्थेन सिन्धोः एतस्मिन् भागे वर्तमानाः सर्वे हिन्दवः इति ग्राह्यम्।

## एतद्देशवैशिष्ट्यम्

धन्याः खलु ये भरतभूमिभागे जाताः। अस्यैव देशस्य महती प्रतिष्ठा यद् अत्रैव देवाः अपि बसतिमिच्छन्ति। हिमालयः अस्य शिरोरत्नम्। दिक्त्रये सागरः अस्य पादप्रक्षालनं करोति। नेदृशो रमणीयो भवति अन्यः देशः। विविधं वातावरणमत्र प्राप्यते। यस्य यादृशं शीतमुष्णं वा इष्टं तत्सर्वमत्र सुलभम्। अत्रैव कृषिप्रसारः सुलभः। कारणान्तरैः अद्य निर्धनोऽयं देशः। तथापि सदैव सुफलः सस्यश्यामलश्च प्रकृतितः। अहो सम्यगाह भगवान् मनुः—

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥"

अत्र 'शिक्षेरन्' इति पदे अवधानं देयम्। तैरिदं शिक्षणीयम्। न तु अस्माभिः अध्यापनीयम्। अतः इदं स्पष्टीभवति यद् आक्रमणं नास्य देशस्य स्वभावः। अन्येषां देशानां ये निवासिनः तैः अत्र आगत्य अत्रत्यानां व्यवहारात् शिक्षा लब्धव्या। तथा च ख्रिस्तादिभिः अत्र आगत्य शिक्षा प्राप्ता इति भवति ऐतिह्यम्।

## "सेक्यूलर स्टेट"

अद्य सर्वत्र 'सेक्यूलर स्टेट' इति शब्दः श्रूयते। किं तस्य तात्पर्यम्। धर्मविहीनं धर्मातीतं वा इति तु न स्यात् तस्य सम्यग् अर्थः। केषांचन विशिष्टानां लोकानामेव धर्मः राज्यधर्मः माभूत् इत्येव अस्य् तात्पर्यम्। अस्य देशस्य धर्मः मानवधर्मः। धर्मो धारयते प्रजाः। अतएव मानवधर्मः एव अत्रस्थानां जनानां धर्मः। सच हिन्दुधर्मः। रामराज्यमितिशब्दे वर्तमानः रामशब्दः न संकुचितार्थ-प्रतिपादकः। रामशब्दः न विशिष्टं धर्मं सूचयति। अखिलस्य एव विश्वस्य सः आदर्शपुरुषः। अतः रामराज्यमिति शब्दः अत्युदारं कंचन आदर्शमेव राज्यस्य सूचयति। एवं मानवधर्मत्वमेव हिन्दुधर्मस्य सत्यस्वरूपम्।

## संस्कृतिशब्दविचारः

भूयान् कालः हिन्दुत्वविचारणे मया यापितः। अधुना संस्कृतिशब्दः विचारणीयः। संस्कृतिशब्दः संस्कारशब्दापरपर्यायः। उभयोः एका एव प्रकृतिः। मानसिकः संस्कारः नाम संस्कृतिः। सभ्यता संस्कृतिश्च इति द्वौ शब्दौ। सभ्यता बाह्या। संस्कृतिः अन्तरंगनिष्ठा। अत्र विचारणीयम्—का हिन्दुसंस्कृतिरिति।

## हिंदुसंस्कृतेः वैशिष्ट्यानि—भिन्नेषु अभेदः

भिन्नेषु अभेदः इति अस्याः प्रथमं वैशिष्ट्यम्। काश्मीरमारभ्य कन्याकुमारीपर्यन्तं भाषाकृतिवेषभोजनादिषु भूयान् भेदः। तथापि अत्र सत्सु अपि भेदेषु यद् एकत्वरूपं तदेव अखंडस्य एकराष्ट्रस्य सूचकम्। चतुर्धामसु यात्रा कार्या इति अस्ति आदेशः। सः खलु अखण्डराष्ट्रस्य निदर्शकः।

## परमतसहिष्णुता

अनेनैव वैशिष्ट्येन आगतमिदं द्वितीयं वैशिष्ट्यम् भेदेषु सत्सु अपि अभेदं पश्यतां अत्रत्यानां स्वमतभिन्ने परमते सति न कश्चन कोलाहल; आक्रोशः तदभिभवः वा। पाश्चात्येषु यथा विद्यते एकरूपता (Standasrdization) न तथा अत्र। भिन्नाहारव्यवहाराः सर्वैरत्र सह्यन्ते। न तेन संघर्षः उपजायते।

## कर्मवादः

भारतवर्षे एव कर्मवादः प्रसृतः। जीवात्मनः संसारस्य पूर्वं परतश्च अवस्थानं भारतवासिनः मन्यन्ते। यत्कर्म मया अस्मिन् जन्मनि लब्धं तन् मम पूर्वकर्मणः फलमिति विचारेण संतोषः संजायते सर्वेषाम्। स्वं कर्म उत्कृष्टतया यद्यहं करोमि तर्हि अन्यस्मिन् जन्मनि अधिकतरं सुखं प्राप्स्यामि इति अस्ति अत्रत्यानां भावना। अत एव स्वे स्वे कर्मणि अभिरताः ते संसिद्धि लभन्ते। स्वकर्तव्यनिष्ठत्वात् तेषु वैमनस्याभावः, विषमताभावः, शान्तिः च आसन् सर्वदा अत्र। अत एव संघर्षः नासीत् वर्गेषु जातिषु वा। संप्रति तु स्वकर्मत्यागात् सर्वत्र संतोषहानिः

(Slow work) इत्यादिरूपिणी। स्वकर्तव्यं फलमनपेक्ष्य एव कार्यमिति आसीद् अत्र उपदेशः। फलमेव अपेक्ष्य यदि कार्यं क्रियते, तर्हि तत्फललाभाय सदुपायानामिव असदुपायानामपि उपयोगः क्रियेत। तत्तु न साधु। फलमनपेक्ष्य स्वकर्तव्यकरणे एव तस्य उभयरूपः उत्कर्षः इति तत्त्वमेव वर्णव्यवस्थायाः मूलम्। प्राचीनतमः अयं देशः। प्रयोगकरणान्तरं सिद्धाः सिद्धान्ताः अत्र शास्त्रेषु संनिहिताः। देशान्तरेषु प्रयोगाः स्युः नाम। नात्र तेषामावश्यकता।

## सामाजिकी व्यवस्था

चतुर्थं वैशिष्ट्यम्। परलोककल्पना अत्र वर्तते। अतएव अस्मज्जीवनस्य द्वे अङ्गे प्रवृत्तिमूलं निवृत्तिमूलं च इति। प्रथमे जीवनार्धे, प्रवृत्तिः द्वितीये अर्धे निवृत्तिः। ब्रह्मचर्यं गार्हस्थ्यं च प्रवृत्तिमूलस्य जीवनस्य अंगे। प्रथमे सति एव द्वितीयं साफल्यं भजते। वानप्रस्थं संन्यासश्च निवृत्तिरूपे। वानप्रस्थाश्रमः एव संन्यासाश्रमयोग्यतादायकः। एवं प्रवृत्तिनिवृत्तिभ्यां द्विधा जीवनम्।

## जीवनस्य विशिष्टः दृष्टिकोणः

व्यष्टेः जीवनं समाजस्य कृते इत्यपि व्यवस्था अभूत्। 'तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यचिद् धनम्' इति आदेशः कस्य तत्वस्य सूचकः। अन्येषां आवश्यकता-पूरणानन्तरमेव अहं गृह्णामि इति अस्ति तत् तत्वम्। अवशिष्टं मया भुज्यते इति आसीत् सर्वेषां भावना। न केवलं मनुष्याः परं काककुक्कुरादयः तिर्यञ्चः अपि भुञ्जतामिति। अत एव 'क्यू सिस्टिम्', ब्लेक मार्केट इत्यनयोः नामापि नासीत्। तयैव व्यवस्थया खलु राष्ट्रे शान्तिप्रतिष्ठापना शक्या भवतीति।" ●

[प्रकाशितं 'युगधर्म'-साप्ताहिके, आश्विन—
कृष्णैकादशी २००६ वि० सं०]

# १२. मीमांसकः मुरारिमिश्रः

मुरारेस्तृतीयः पन्थाः' इति संस्कृतपण्डित—समाजे प्रसिद्धा जनश्रुतिः। विरुद्धमतद्वयस्य विचारे कस्य अन्यतरस्य मतस्य स्वीकारः तर्क युक्त इति यदा कश्चित् विद्वान् पृच्छ्यते, स च मतद्वयमपि तिरस्कृत्य भिन्नमेव स्वकीयं स्वतन्त्रं मतमुपस्थापयति तदा मीमांसकशिरोमणेः मुरारेः स्मरणं भवति। यतः सः परम्परागत—प्रसिद्धमीमांसकयोः प्रभाकरकुमारिलयोः मतं परित्यज्य विशिष्टविषयेषु स्वकीयं तृतीयमेव मतं स्वीकरोति। अतएव उच्छृङ्खलेन वादिना परिहासविजल्पने मुरारि मिश्रः उपमीयते, यः मम कुक्कुटस्य त्रयः पादाः' इति सामिनिवेश-मुद्घोषयति। परमिदं तुलनाकरणं सर्वथा असमीचीनम्। मुरारेः मतं श्रद्धेयं तर्कसमन्वितं च। अतएव विद्वद्भिः स सप्रश्रयं विमृश्यते। तन्मतं मीमांसाशास्त्रीयचिन्तने विशिष्टं स्थानं अलंकरोति।

मिथिलाभिजनः मुरारिमिश्रः ईसवीय द्वादशशतके ततः किञ्चिन्पूर्वं वा जन्म लेभे इति वाङ्मयेतिहासविद्भिः स्वीक्रियते। यतः मीमांसकाः श्रीकर-वाचस्पति-शङ्कर-पक्षधर-मिश्रप्रभृतयः मुरारिमतोल्लेखं सनामनिर्देशं स्वग्रन्थेषु कुर्वन्ति। त्रयोदशशतकोत्पन्नस्य नव्य-न्यायप्रवर्तकस्य गङ्गेशोपाध्यायस्य सूनुर्वर्धमानः स्वकीये न्यायकुसुमाञ्जलि-व्याख्याने मनसैव ज्ञानप्रामाण्यग्रहण-विषयकं मतं स्पष्टतया मुरारिमिश्रोपजीव्यमिति निर्दिशति। स्वयं मुरारि-मिश्राः दशमशतकोत्पन्नस्य 'नयविवेक-ग्रन्थ-रचयितुर्भवनाथस्य मतमुल्लिख्य तेन स्वविरोधं सूचयति। अतः दशमत्रयोदशशतकयोर्मध्यकाले उपद्वादशशतकमस्य प्रादुर्भावः इति प्रमाण सिद्धम्।

मुरारिमिश्रकृतग्रन्थविचारप्रसङ्ग इदं सखेदं सूचनीयमस्तियत् तथा विश्रुतस्य स्वातन्त्र्येण मतोल्लेखार्हस्य मुरारि मिश्रस्य कोऽपि सम्पूर्णो ग्रन्थो नाद्य दृष्टिगोचरो भवति। केवलं त्रिपादी-नीतिनयनम् एकादशाध्यायाधिकरणं च इत्येतावेव—द्वौ अल्पकायौ लघुग्रन्थौ सम्प्रत्युपलभ्येते। परन्तु मुरारिमिश्रस्य उत्तरकालीन—मीमासाविषयकग्रन्थेषु बहुशो निर्देशनेन भूरिशश्च तन्मतपर्यालोचनेन इदं सम्यगनुमातुं शक्यते यत् तेन जैमिनिसूत्राणां द्वादश लक्षण्याः समीक्षात्मिका व्याख्यान-टीका रचिता भवेत्। तेनैव कारणेन अस्य मीमासादर्शने प्रख्यातग्रन्थकारेषु गणना क्रियते इति विदुषां मतम्।

मुरारिमिश्रस्य तृतीयमतप्रख्यापकत्वं एतन्मतस्यासामान्यत्वम् अभिव्यनक्ति। प्रथमद्वितीयमत-योरुपस्थापयितारौ प्रभाकर-कुमारिलौ इति विद्वत्समाजे सुपरिचितम्। मीमांसा-शास्त्रं खलु विमर्शशास्त्रमिति हेतोः तत्रानेकमतानां खण्डनमण्डने स्वाभाविके एव। अतएव अस्मिन शास्त्रे पदे पदे मतवैविध्यं दृष्टिगोचरीभवति। विशेषतः प्रभाकर-कुमारिलयोः मत-

भेदः। तत्रापि विशिष्टस्थलेषु मुरारिसमर्थितं भिन्नमेव स्वतन्त्रं मतं प्रतिपादितं दृश्यते। तादृश-स्थलेभ्यः कानिचिदुदाहरणानि विषय-स्पष्टीकरणदृष्ट्या निर्दिश्यन्ते।

प्रामाण्यवादो मीमांसाशास्त्रे मूर्धन्यस्थानं लभते। अतएव शङ्करदिग्विजये प्रसिद्ध-मीमांसकस्य मण्डनमिश्रस्य 'धाम कुत्र इति पृष्टवते शङ्कराचार्याय 'स्वतः प्रमाणं परतःप्रमाणं कीराङ्गना यत्र गिरो वदन्ति, इति गृहसङ्केतो वर्णितो दृश्यते। अतः स्पष्टमिदं यत् मीमांसा-शास्त्रे ज्ञानप्रामाण्य-विषये महान् मतभेदः। प्रभाकरः ज्ञानस्य स्वतः प्रामाण्यं मन्यते। ज्ञानं प्रकाशसदृशम्। यथा दीपप्रकाशः दृश्यमानं घटपटादिकम्, आत्मानम् अर्थात् प्रकाशं, तथा प्रकाशाश्रयभूतां ज्वलन्ती दीपवर्तिकां चेति वस्तुत्रयं प्रकाशयति, तथैव इन्द्रियार्थ-सन्निकर्षजन्यं ज्ञानमपि ज्ञेयं (पदार्थम्) आत्मानमर्थात् ज्ञानं तथा ज्ञानाश्रयभूतमात्मामिधेयं आत्मानं चेति ज्ञेयम, ज्ञानं ज्ञातारमिति वस्तुत्रयं समकालमेव प्रत्यक्षं करोति। इदमेव त्रिपुटी-प्रत्यक्षम् इत्यभिधीयते।

कुमारिलमते तु ज्ञानमतीन्द्रियम्। घटज्ञाने जाते ज्ञातो घट इत्यनुभूयते। अर्थात् प्रत्यक्ष-विषये घटे ज्ञातता नामको धर्मं उदेति॥ स एव च प्रत्यक्ष-विषयो भवति। किन्तु ज्ञातता धर्मस्योत्पत्तिः अन्यथा नोपपद्येत, अतः अन्यथानुपपत्तिरूपया अर्थापत्त्या ज्ञानं तत्प्रामाण्यं च सिध्यति। अतः अर्थापत्तिमूलकत्वेन ज्ञानस्य परतः प्रामाण्यं सिद्धं भवति। एतद्विषये मुरारि मिश्रस्य भिन्नमेव मतं दृश्यते। तथा हि विषयेन्द्रिय-सन्निकर्षेण जायमानज्ञानं व्यवसायात्मकं भवति। तदनन्तरं घटमहं जानामीति अनुव्यवसायात्मकं ज्ञानं उत्पद्यते। अनुव्यवसायात्मकं ज्ञानमेव ज्ञानप्रामाण्यस्य जनकम्। एतन्मतत्रयस्य सम्यक् समीक्षणे कृते परस्परभेदः इत्थंभूतः प्रतीयते। 'स्वतः' प्रमाणम् इति पदे स्वं प्रमाप्रमात्वम्—एतत् प्रभाकरमते। 'परतः प्रमाणमिति' पदे परतः अर्थात् प्रमायाः भिन्नायाः सामग्रीत प्रमाणमित्यर्थः। सा अन्यसामग्री ज्ञाततधर्मः अथवा अनुव्यवसायात्मकं ज्ञानम्। प्रथम-विकल्पः कुमारिलमते, द्वितीय-विकल्पः मुरारि मिश्रमते। अतः शुद्धं स्वतः प्रामाण्यं प्रभाकरमते परतः प्रामाण्यं कुमारिल-मुरारि मिश्रयोः मते इति विवेकः।

मुरारिमतस्य अन्यो मतभेदः भ्रमात्मक-ज्ञानविषयप्रतिपादने दृश्यते—रज्जौ सर्पभ्रमे इयंरज्जुः इति इदंविषयकं ज्ञानं प्रत्यक्षविषयतया प्रामाणिकंती किन्तु तत्रैव अयं सर्पः इति सर्पप्रतीतिः पूर्वदृष्टसर्पस्य स्मृतिरूपा। तत्र प्रत्यक्षस्मृत्योः परस्परभेदाग्रहणात् भ्रम उत्पद्यते। रज्जोः प्रत्यक्षं भवति। सर्पस्य स्मृतिः इति रज्जुसर्पयोः नैकं ज्ञानं, किन्तु द्वे विज्ञाने-प्रत्यक्षं स्मृति श्चेति। तयोर्मध्ये अविवेकः एव भ्रममूलम्। स एव अख्यातिः इति उच्यते। मुरारिमिश्रमतं तु अत्र भिन्नमेवास्ति। रज्जुविषयकं ज्ञानं रज्जुत्व-प्रकारकं, सर्पविषयकं ज्ञानं सर्पत्वप्रकारकं भवति। किन्तु यदा रज्जुविषयकं ज्ञानं सर्पत्वप्रकारकं भवति तदा विषय-प्रकारयोः भेदेन तथाविधं ज्ञानं अन्यथाख्यातिः विपरीतख्यातिः इति वा अभिधीयते।

एवमेव पदार्थसंख्या-तत्स्वरूपविषयेऽपि मुरारिमतं अन्येभ्यो भिद्यते। द्रव्य, गुण-कर्म-व्यक्ति-परतन्त्रता-शक्ति-सादृश्य-संख्या इत्यष्टौ पदार्थाः प्रभाकरमते। कुमारिलमते पूर्वं भावा-भावरूपौ द्वौ पदार्थौ ततः अभावचतुष्टयस्य (प्रागभाव-प्रध्वंसाभाव-अन्योन्याभाव-अत्यन्ता-

[४० पृष्ठे द्रष्टव्यम्]

# १३. अद्यतनं भारतवर्षम्

अद्यतनभारतवर्षस्य वर्णनावसरे पुरातनभारतवर्षस्य स्मृतिपथागमनं स्वाभाविकम्। तत्रापि इदमवधेयम् यत् भारतवर्षविषये पुरातनाद्यतनयोर्मध्ये न तादृशः कश्चन मौलिको भेदो वर्तते। अत्र सर्वं वस्तु तदेव तदाकारं तद्रूपं च लक्ष्यते। क्वचिद् विषये लक्ष्यमाणोऽपि भेदः केवलं छायाश्रितः एव, न वस्त्वाश्रितः। मानवजीवनस्य विविधरूपाणाम् अपरिवर्तनस्य यथा भारतवर्षे निदर्शनम्, न तथा अन्येषु देशेषु। अस्य प्रधानकारणं देशस्य भौगोलिकी स्थितिः। अत्र ऋतूनां क्रमः पुष्पफलसमृद्धिं तथैव जनयति, यथा पुरातनकाले। कृषीवलाः द्वयोः वलीवर्दयोः साहाय्येन तथैव हलसञ्चालनं वीजवपनञ्च कुर्वन्ति, तथैव सस्य-परिपाके जाते छेदन-मर्दनमार्जनादिकर्मभिः अन्नराशिं सम्पाद्य स्वभाण्डारं पूरयन्ति, यथा पुरातनसमये। धर्मप्रवणो-जनः मूर्तिपूजा-तीर्थयात्रा-दानदक्षिणादिकर्मसु तथैव दत्तावधानो यथा पूर्वम्। भोजनाच्छादन-विधिः सामाजिकोत्सवाः च पुरातनकालीनरूपमेव धारयन्ति। अतएवोक्तं केनापि विदुषा यद् भारतदेशे कालस्य गतिवेगः अतीवमन्दोऽस्ति। संसारस्यान्यभागेषु स्वल्पेनैव कालेन अर्थात् कतिभिरेव दशकैः शतकैर्वा आमूलपरिवर्तनं जातं जायते च। शासनाधिकारिणः उत्पाटयन्ते वैचारिकक्रान्त्या निवासिनां विचारक्रमः परिवर्तितो भवति। वेशभूषादिषु अप्रत्यभिज्ञेयम् अन्यविधत्वं नेत्रगोचरीभवति। भीषणभूकम्पादिप्रकृत्युत्पातैः देशस्य स्वरूपे परिवर्तनं जायते। 'पुरा यत्र स्त्रोतः पुलिनमधुना तत्र सरिताम्'। क्षितिरुहां च घनविरलभावो विपर्यासं गच्छति। परिवर्तिनि संसारे को हि नाम ध्रुवो भवेत्। यत् सत् तत् क्षणिकम् इति बौद्धदर्शनानुसारं सर्वं दृश्यमानं वस्तु अध्रुवमेव। संसारशब्दार्थः 'संसरति यः स संसारः' इति व्युत्पत्त्या जगतः परिवर्तनशीलत्वं दर्शयति। किं बहुना जगत्पदमपि 'गच्छतीति' जगत् इति व्युत्पत्या तमेवार्थं पुष्टीकरोति। परन्तु शाश्वतसत्यमिदं परमतत्त्वं भारतवर्षस्य विषये तन्नियमस्य किञ्चित् शैथिल्यमनुमन्यते। अस्य किं कारणम् इति इदानीं मीमांस्यते।

सृष्टिप्रपञ्चे दृश्यमानेषु अन्येषु देशेषु सर्वेभ्यः पुरातनतमोऽयं देशः। कामं बभूवुः सुमिरि-यन-बैबिलोनियनादिसभ्यताः, परन्तु ताः इदानीं स्मृतिमात्रावशेषाः ध्वंसावशेषरूपावा स्मर्यन्ते। तासां जन्मदेशाः इदानीं महाकाललीलया परोक्षतां नीताः। किन्तु भारतवर्षस्य स्थितिः अन्यत्रादृष्टपूर्वा। अविच्छिन्नप्रवाहेण सृष्टेरादितोऽद्यावधि प्रवर्तमाना एतद्देशसंस्कृतिः सर्वेषा-माश्चर्यस्थानम्।

उत्तरस्यां हिमालयेन पूर्व-दक्षिण-पश्चिमोत्तर-दिग्भागेषु सागरेणावृतायां भारतभूमौ जन्म लब्धुं देवा अपि सकामाः भवन्ति। इतिहासस्य विभिन्नकालेषु विदेशीयैराक्रान्तापि इयं भारतभूमिः सर्वेषां महत्त्वगुणानात्मसात्कृत्य आत्मनः संस्कृतिं समर्धयति। विदेशीयाः अपि अत्र निवसन्तः

स्वदेशीयाः जायन्ते। भूम्याक्रमणदृष्ट्या जेतारोऽपि सांस्कृतिकदृष्ट्या पराजिताः भवन्ति। विभिन्नसंस्कृतिषु सामञ्जस्यस्थापनेन समन्वयविधानेन च भारतीयसंस्कृतिः विभिन्नरूपा प्रतीयते। रूपं रूपं प्रतिरूपा दरीदृश्यते ? विभिन्नैः विभिन्नैर्धर्माचार्यैः परिपोषिता परमतसहिष्णुतागुणेन स्वीयभावम् अर्थात् अस्मिताम् अपरित्यजन्ती भारतीयसंस्कृतिः विश्वसंस्कृतिरूपैव भवति। अत्रत्या व्यक्तिसमाजोभयोन्नतिनिमित्तिका आचारव्यवस्था समस्तविश्वस्य योगक्षेमाय कल्पते।

परन्तु कालमहिम्ना इदानीं कापि परिवर्तिता विचित्रा स्थितिः भारतदेशे समवलोक्यते। दृष्टिपथमागच्छन्त्याः अस्याः स्थितेः अक्षिनिकोचनेन नापलापः समुचितः। अप्रियमपि सत्यं वक्तव्यमेव।

इदानींतनेषु दिवसेषु चतुर्दिक्षु आचारनिष्ठायाः, सिद्धान्तवादस्य, कर्तव्यपरायणतायाः च अभावः प्रत्यहं परिदृश्यते। एतद्गुणानां महत्त्वस्य स्थानं कदाचारेण निष्ठाशून्यतया च गृहीतमिवास्ति। स्वराज्यप्राप्तेरनन्तरं घोष्यमाणस्य धर्मनिरपेक्षवादस्य अधार्मिकवादे पर्यवसानं सञ्जातमस्ति। आचारः परमो धर्मः इतीदानीं सर्वथा विस्मर्यते। मानवजीवनस्य वर्तमानदर्शनम् अध्यात्मवादं परित्यज्य भौतिकवादं समाश्रयते। भौतिकवादस्य सर्वप्रधानं तत्त्वं धनमस्ति। तदेव मानवमहत्त्वस्य निकषत्वेन अङ्गीक्रियते। तदभावे विद्वत्तायाः अन्यविधयोगतायाः वा मूल्यं शून्यमेव। अतः सर्वान् गुणान् परित्यज्य सर्वेऽपि जनाः यदि धनोन्मुखा एव भूत्वा लौकिकोन्नतिमेव परमपुरुषार्थत्वेन मन्येरन् तदा किमाश्चर्यम्।

परन्तु नेयं वाञ्छनीया परिस्थितिः। यतः लोकतन्त्रस्य समाजवादस्य च व्यवस्था आचारनीतिविरहितवातावरणे साङ्कुरैव न भविष्यति पल्लवपुष्पफलादीनां तु कैव कथा। उक्तमस्ति—'धर्मो विश्वस्य जगतः प्रतिष्ठा'। धर्मो धारयते प्रजाः। अत्र सुभाषिते धर्मपदं न साम्प्रदायिकधर्मं नापि बाह्याडम्बरालङ्कृतं धर्मं स्वार्थेऽन्तर्भावयति। धारणाद्धर्म इत्याहुः इति हि तथ्यं वचः।

आधुनिककाले प्रकृतिविज्ञानस्य समाजविज्ञानस्य च योऽखिलव्यापी प्रभावः दृश्यते तेन दर्शनस्य क्षेत्रं धर्मस्य क्षेत्रं च परस्परनिरपेक्षमिव संजातमस्ति। भौतिकजगति सामाजिकजगति च धर्मदर्शनयोः इदानीं स्वातन्त्रिकी स्थितिः स्वीक्रियते।

अद्यतनकाले धर्मक्षेत्रम् अध्यात्मक्षेत्रम् च सीमितं मत्वा जनैः तस्य मानवजीवनव्यापी प्रभावः तिरस्क्रियते। किन्तु नेदमकारणम्। विश्वेतिहासस्य मध्ययुगे धर्मगुरवो राजाश्रिता भूत्वा सदैव शोषितवर्गम् अनात्मीयमिव अमन्यन्त। जन्मना जातिवादस्यातिरेकपूर्णं महत्त्वं कर्मफलवादस्य तर्केण समाधाप न्याय्यं च प्रतिपाद्य निम्नवर्गीयाणां आत्मोन्नत्युद्योगः समाजनेतृभिः नैराश्यगर्ते पातितः। नवीनोपलब्धेन विज्ञानचमत्कारेण मान्यताप्राप्त-पूर्वविचाराणामश्रेद्धयत्वदशा स्वाभाविकी।

अस्मिन् विषये इदं न विस्मरणीयं यत् भारतवर्षस्य संस्कृतौ तत्परम्परायां च विचारस्वातंत्र्यम् आचारे च साङ्कुशत्वं सर्वदैव समाद्रियते स्म। मनुप्रतिपादितस्य धृतिः क्षमा दमोऽस्तेयमिन्द्रियनिग्रहादि दशविधधर्मस्य सर्वकालीनत्वं च समस्तमानवोपयोगित्वं च निर्विवादं

स्वीक्रियते। पुराणोक्तपरम्परानुसारं वर्तमाना दुस्थितिः दुरवस्था च न चिरस्थायिनी, किन्तु विद्युल्लतेव अचिरप्रभा।

भगवद्गीतायां 'यदा यदा हि धर्मस्येत्यादि (भगवतोक्ते) आश्वासनवाक्ये आस्थां श्रद्धां च धारयन्तो वयम् आत्मनो देशे भारतवर्षे शुभोदर्कमेव सर्वं भविष्यति इति विश्वासं कुर्मः। तथास्तु।

[ **दिनांके (३-५-१९७०) आकाशवाणी-वार्तावसरे लिखितम्** ]

---

[**पृष्ठ ३७ तः आगतः**]

भावानाम्) भावेन सह गणनाया पञ्चपदार्थाः स्वीक्रियन्ते। मुरारिमिश्रस्तु वेदान्तमतवत् ब्रह्मैव एकमात्रं पदार्थं स्वीकरोति। व्यवहारे तु धर्मिविशेषः (द्रव्यरूपः), धर्मविशेषः (गुणरूपः) आधारविशेषः (इदानीं तदानीमिति कालकृतः), प्रदेशविशेषः (गृहे भूतले इति प्रदेशकृतः) इति धर्मि-धर्म-आधार-प्रदेशभेदोपाधिभिः सह निरूपाधिब्रह्मणः सत्तां स्वीकरोति। इति संक्षेपेण मुरारिमिश्रस्य परिचयः।

[ **दिनांके (२८-१-१९७०) आकाशवाणी-वार्तावसरे लिखितम्** ]

# १४. स्वाधीनता—तस्या उपलब्धयश्च

पारतंत्र्यं महादुःखम्' इति सुप्रसिद्धं सुभाषितम्। विगतानेकशतकेषु दासतापाशबद्धः भारतदेशः अनेकविधाः आर्थिक-राजनैतिकदुर्दशा अनुभवन् विश्वराष्ट्रेषु निम्नस्थानं पतित आसीत्। दासताकालस्य दैर्घ्येण सातत्येन च तस्य दीनहीनदशा अतीव दयनीया जाता इत्यहो महती कालविडम्बना। नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण इति कालिदासोक्त्यनुसारं चक्रारपंक्तिरिव भारतभाग्यपंक्तिः पुनरुन्नत्यभिमुखी जातेति स्वागतार्हं दशापरिवर्तनम्। देशस्य कर्णधार-नेतृभिः सुदीर्घकालं घोरकष्टमनुभूय महता परिश्रमेण विदेशीयशासनात् द्वाविंशतिवर्षेभ्यः पूर्वं भारतवर्षे स्वतंत्रता अधिगता। तदनन्तरं देशोन्नतिसूचिका या नवोपलब्धयः तासां चर्चा अद्यतन-संस्कृतवार्तायां लक्ष्यमिति सैवेदानीं प्रारभ्यते।

युगपरिवर्तनमिव शासनपरिवर्तनमपि क्रान्तिकारि भवति। अतएव 'राजा कालस्य कारणम् इति विदग्धोक्तिः संगच्छते। शासनक्रमपरिवर्तने न केवलं जनमनांसि पिञ्जरोन्मुक्तविहगा इव स्वच्छन्दतामनुभवन्ति, अपि तु जीवनस्य विविधक्षेत्रेषु भौतिकसमृद्धिसूचकानि परिवर्तनानि परिलक्ष्यन्ते। तथाहि। कृषिप्रधानो भारत देशः। अत्रत्यः प्रजाजनः प्रधानतया कृषिमाध्यमेन स्वजीविकां' सम्पादयति। कृषिफलं मेघवृष्ट्यायत्तमिति हेतोः प्रतिवत्सरं वर्षर्तुकाले जनपद निवासिनः कृषीवलाः निर्निमेषलोचनैः मेघागमनं प्रतीक्षन्ते। ग्रीष्मर्तौ निदाघतापतप्ता भूमिः वर्षाग्रबिन्दून् प्राप्य हर्षरोमाञ्चितेव अङ्कुरिता जायते, कतिपयैरेव मासैः भास्कररश्मिसकाशात् उष्णतां लब्ध्वा भूयसीं सस्यसम्पदं प्रसूते। परन्तु एष सृष्टिनियमो व सर्वदा वाञ्छितक्रममनुसरति। दैवकोपात् अनावृष्टौ सत्यां सैव क्षेत्रभूमिः असञ्जातप्रसवा वन्ध्येव निष्फला संजायते। तदा न केवलं प्रजाजनः खाद्यान्नानुत्पादेन विपन्नतां गच्छति, अपि तु देशस्य गोवलीवर्दादिकं पशुधनमपि क्षुत्तृड्भ्यां व्याकुलं भवत् मृत्युमुखं प्रविशति। एतेनैव कारणेन अनेक प्रदेशा 'देवमातृका': इत्युच्यन्ते। यतस्तत्र वृष्टिकारको देवः एव प्राणधारणसामर्थ्यजनिका माता भवति। इदानीं तेषु स्थलेषु नदी-प्रणालिकाः, जलाशयाः पातालभेदिनो नलकूपाश्च सस्याभिवृद्धयै जीवनदायकं जलं सुलभं कुर्वन्ति। अधिकक्रृष्यु पयुक्तत्वविधानाय कर्षणयंत्राणि भूमिहृदयं विदार्य बीजाङ्कुरणशक्तिं प्रवर्धयन्ति। वपनीयानां बीजानां सवीर्यत्वसम्पादनाय 'खाद' रूपेण ऊर्वरकचूर्णप्रयोगः सस्योत्पादनपरिमाणे आश्चर्यावहां वृद्धिं जनयति। एवंप्रकारेण कृषिविषये प्रादुर्भाविता हरितक्रान्तिः स्वातंत्र्योत्तरकालीनोपलब्धिषु प्राथम्यं भजते।

जलविद्युतो वाष्पविद्युतो वा उत्पादनाय विद्युत्संयंत्राणां व्यवस्थया विद्युत्स्तंभानां ग्रामीणक्षेत्रस्य सुदूरस्थलेषु प्रापणेन ग्रामा ग्रामटिकाश्च विद्युत्प्रकाशप्रकाशिताः कृताः सन्ति

येन न केवलं तिमिराच्छन्नानि कृषकगेहानि प्रकाशवन्ति जातानि, अपि तु कृषकमनांस्यपि हर्षो-त्फुल्लानि परिलक्ष्यन्ते। यतो विद्युद्विस्तारेण लघुकुटीरोद्योगस्य संवर्धने सुकरे जाते जीवन-सुखोपयोगीनि अनेकानेकव्यवहारप्रयुक्तानि वस्तूनि सूपलब्धानि भवन्ति। इदानीं 'रेल' मार्गेण कष्टकर्यो दीर्घयात्राः सौविध्यपूर्णाः संजाताःसन्ति, रात्रौ सुखशायिकार्थं शयनकक्ष-व्यवस्था, यानगतौ वृद्धिः, (यथा एकरात्र्येव दिल्लीतः कलिकाताप्राप्तिः, आकाशयात्रायां कतिपयहोराभिः एव सुदूरस्थल-यात्रासमाप्तिः इत्यादयोऽनेके नवीनोपक्रमाः जनजीवने जीवनसौकर्यमानीय जीवनं जीवनीयं कुर्वन्ति।

आयुर्वेदक्षेत्रे विज्ञानशास्त्रप्रगतिः अनेकदृष्टिभिः कौतुकावहत्वं भजते। भयंकररोगो-पशमोपायाः, सङ्क्रामकव्याधीनां नियमनं, चिकित्सापद्धतिसुधारः इत्यादीनि जनस्वास्थ्य-संव-र्धनसाधनानि उपलब्धानि सन्ति, येन जनानां दीर्घायुष्ट्वं स्वस्थजीवनं च सुलभं संजातमास्ति। स्थिरैरङ्गैःतुष्टुवांसःतनूभिःव्यशेम देवहितंयदायुः'इतिवैदिकप्रार्थनायाःफलमिदानींहस्तगतंमन्यामहे।

देशस्य सर्वेषां निवासिनां समकालमेव समुन्नतिः अभीष्टा इति हेतोः तत्र भेद व्यवहारः अनर्थकरो मन्यते। सवर्णैः सह गिरिजनानामरण्यनिवासिनां च समुन्नयनं, शिक्षाक्षेत्रे, सेवा क्षेत्रे च कर्तव्यकोटावानयनं च न सामान्योपलब्धिः। पण्डिताः समदर्शिनः इति न्यायेन सर्वेषां जनानां व्यवहारे समीकरणं-न वर्गभेदं जनयेत्' इति आधुनिकसिद्धान्तं प्रवर्तयति। धर्म-सम्प्रदाय-जातिलिङ्गमूलकभेदा उपेक्षणीयाः मन्यन्ते। 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इति सिद्धान्तपालने परमतासहिष्णुत्वं सर्वथा हेयत्वेन तिरस्क्रियते। सर्वजनहितायैव व्यवहारे सर्वे प्रयत्नाः सञ्चाल्यन्ते। एवंविधः सामाजिक-सुधारविषयको दृष्टिकोणः अन्यतरोपलब्धित्वेन परिगणयितुं शक्यते।

विद्याक्षेत्रेऽपि अभूतपूर्वपरिवर्तनं प्रमोदं जनयति। साक्षरताप्रसारः विभिन्न शास्त्राणा-मुच्चतमस्तरावधि पाठनव्यवस्था, नवीनविद्यापीठसंस्थापनं, छात्रवृत्यादि-विविधसौकर्य-प्रदानं , ज्ञानप्रसारे ज्ञानसंवर्धने च वाञ्छनीयं समुत्कर्षं सूचयन्ति । महिलाशिक्षाविषये इव संस्कृतशिक्षाविषयेऽपि इदानीमनन्यसामान्योऽभिनिवेशः। विद्यालयाय-सर्वस्तरेषु संस्कृता-ध्ययनोत्साह-प्रवर्धनं, आकाशवाणीमाध्यमेन संस्कृतशिक्षण-मनोरंजककार्यक्रम-योजनादि विविधकार्यजातैः जनतायां संस्कृतविषयिणी रुचिः संवर्ध्यते।

किं बहुना। सर्वविधक्षेत्रेषु इदानीं कल्याणकारियोजनाः देशस्य शुभोदर्क व्यञ्जन्ति। 'सर्वं परवशं दुःखं सर्वं आत्मवशं सुखम्' इति न्यायेन स्वाधीनताकाले सर्वोऽपि सम्पाद्यमानः कार्यक्रमः आत्मनः सुखावहो भवति। पराधीनताकाले प्रच्छन्नप्राया भारतीय-प्रतिभा इदानीं स्फुटतरा प्रकाशमागच्छति। अन्तरराष्ट्रीय सम्बन्धेषु भारतवर्षस्यापूर्वं योगदानं सर्वैः स्वीक्रियते। पञ्चशीलस्य अवतारणा भारतवर्षेणैव प्रारब्धा। परमतासहिष्णुत्वं परित्यज्य विश्वबन्धुत्वं प्रोत्साहनीयम्। विवादविषयाः परस्परपरामर्शेण समाधेयाः। तत्र हिंसावादः सर्वथा अननुभन्तव्यः इत्यादयः आदर्शसिद्धान्ताः विश्वराष्ट्रसमाजे भारतवर्षं गौरवपूर्णस्थाने स्थापयन्ति। अतएव प्राचीनकाले इव अद्यापि-एतद्देशप्रसूतस्य सिद्धान्तस्यानुपालनात्। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवा' इत्युपदेशः सार्वकालीनः शाश्वतादर्शी भवितुमर्हति।

**दि. (१५-८-१९७१) आकाशवाणीवार्तावसरे लिखितम ।**

# १५. सत्त्वाधीना हि सिद्धयः

'सत्वाधीना हि सिद्धयः' इति सुभाषितं स्पष्टमपि दुर्बोधमिव प्रतीयते। सत्त्वाधीना इतिपदम् अभिलषितार्थं न सहजतया व्यनक्ति। तत्र सत्त्व पदस्यार्थः पूर्वं निर्धारणीयः। सतो भावः सत्त्वम् इति अस्य व्युत्पत्तिः। तत्र किं नाम सत् इति निश्चेयम्। भगवद्गीतास्थः "सद्भावे साधुभावे च सदित्येवाभिधीयते। प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते" इति श्लोकः स्मृति-मुपयाति। सद्भावे, साधुभावे, प्रशस्ते कर्मणि चेति अर्थत्रयेऽस्य पदस्य प्रयोगो गीतानुमतो दृश्यते। तथाहि—अस्तीतिव्युत्पत्या शतृप्रत्ययान्तं नपुंसकलिंगे इदं पदं यत् अस्ति, वर्तते, अस्तित्वं भजते, तस्य वाचकम्। सांख्यशास्त्रोक्त-सत्कार्यवादपदे अयमेवार्थः। कारणे कार्यं सत् वर्तमान भवतीति तस्य तात्पर्यम्। यदेव अस्तितत् सत् इत्यभिधीयते। इति प्रथमार्थः। पुलिङ्गीयस्य सन् इत्यस्य साधुः इत्यर्थः। "सन्त" इति हिन्दी भाषायाम् अयमेवार्थो दृश्यते। 'सज्जन' शब्दे स एवार्थः। अस्तित्वं भजमाना न सर्वे सन्तः, अर्थात् सज्जनाः भवन्ति किन्तु साधुस्वभावाः शिष्टव्यवहारशालिनः सज्जनाः एव सत्पदेनाभिधीयन्ते। सत्पदस्य तृतीयार्थः कः इति विचारे प्रशस्तं कर्म सत्पदेनाभिधीयते। सत्कर्म'-'असत्कर्म' पदयोः अय-मेवार्थः परिलक्ष्यते। न सर्वं कर्म सत्कर्म भवति, किन्तु प्रशस्तं कर्मैव सत्कर्म-पदेन प्रतिपाद्यते। सन्ताश्रयः सर्वोऽपि सन् इति प्रथमार्थः, साधुस्वभावः सज्जन इत्यपरशब्द पर्यायः द्वितीयोऽर्थः। प्रशस्तं निर्दोषम् कर्मेति तृतीयोऽर्थः। एवं प्रकारेण सत्पदेन त्रयोऽर्थाः अभिधीयन्ते॥ किन्तु "सत्वाधीना हि सिद्धयः" इति सुभाषिते" सत्वपदान्तर्गत-सच्छन्दः कमपि विशिष्टमर्थान्तरं बोध-पति। सतो भावः सत्वम्" इति व्युत्पत्तिलब्धस्य सत्वपदस्य कोऽपि विशिष्टोऽसामान्यः अर्थः। सत्वं नाम कोऽपि व्यक्तेः विशेषगुणः, व्यक्ति-प्रतिभा व्यक्तित्वमिति यावत्। आंग्लभाषायां 'पर्सनालिटी' पदवाच्यः व्यक्तिविशेष इत्यर्थः अत्राभिप्रेतो भवति। स च विशेषगुणः न सर्वत्र सुलभः। सर्वेऽपि जनाः न तादृशव्यक्तित्वशालिनः। विशिष्ट एव कश्चन नरः सत्त्वगुणान्वितो दृश्यते। सामान्यजनापेक्षया स सुतराम् असामान्यः दुर्लभ इति यावत्। तस्य व्यक्तित्वं विशिष्टं. भवति। जगति प्रमुखा नराः नेतारः इत्यभिधीयन्ते, तेषु यः नेतृत्वगुणो भवति स सदित्यभि-धातं शक्यते। तदेवम् सत्त्वाधीना हि सिद्धयः इति सुभाषितेन अयमेवार्थविशेषः प्रतिपाद्यते यत् सिद्धिः, अर्थात् सफलता, व्यक्तिविशेषे एव दृश्यते न सर्वत्र। सिद्धयः सत्त्वाधीनाः सन्ति।

क्रियासम्पादने कर्ता करणं चेति द्वयमपेक्ष्यते। कर्त्ता करणसाहाय्येन क्रियां साधयति। यथा देवदत्तः खड्गसाहाय्येन शत्रुं हन्ति। शत्रुहननरूप-क्रियायाः देवदत्त-कर्तृरूपः प्रधानः, देवदत्तस्य खड्गः कर भृशमुपकारकम्। किन्तु केवलम् करणेन खड्गेनैव क्रियासिद्धिर्न सम्भ-

वति। करणान्तरेण वाणेनापि शत्रुहननस्य सुशकत्वात्। क्रियासिद्धि: कर्तुरधीना न करणाधीनेति स्पष्टमेव। स एवार्थः सत्त्वाऽधीना हि सिद्धिः इति सुभाषितेन प्रतिपाद्यते।

क्रिया-सिद्धिः सत्वे भवति महतां नोपकरणे इति सुभाषिते स एवार्थः स्पष्टतरं लक्ष्यते। महतः क्रियासिद्धिः तेषां सत्त्यम् आश्रित्य जायते। नोपकरणानि कार्यसिद्धि-जनकानि। सत्स्वपि उपकरणेषु सिद्धि: अर्थात् साफल्यं न निश्चितम्। यतः उपकरणानि साधनानि-न ऐकान्तिक रूपेण आत्यन्तिक-रूपेण वा सिद्धिं साफल्यं न जनयन्ति। सिद्धिप्राप्तये सत्त्वम् अर्थात् नेतृगुणाः अपेक्षिता भवन्ति। उदाहरणरूपेण अनेके श्लोकाः "क्रियासिद्धिः सत्त्वे भवति महतां नोयकरणे' इति चतुर्थ-पाद-समस्यापूर्तिरूपेण संस्कृतसाहित्ये सुप्रसिद्धाः सन्ति। तेष्वेकः श्लोकः अत्रोद्ध्रियते—"रथस्यैकं चक्रं भुजग-यमिताः सप्त तुरगाः। निरालम्बो मार्गश्चरणविकलः सारथिरपि। रविर्यात्येवान्तम् प्रतिदिनमपारस्य नभसः। क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे।"

अयम्भावः। प्रतापशाली भगवान् भास्करः स्वतेजसा सकलं जगदभिभवति, अनन्य जुष्टं महत्वं च लभते। कविकालिदासः "भानुः सकृद्युक्ततुरंग एव" इत्युक्त्वा भगवतः सूर्यस्य ऐश्वर्यं प्रशंसति। एतन्महामहिमशालित्वम् सूर्यस्य स्वनिष्ठगुणविशेष-माहात्म्येन प्राप्यते। सहायकानां करणादीनां तत्रोपयोगो न प्रामुख्येन भवति। एष एव भावः उपर्युक्तश्लोके विशदरूपेण निरूप्यते। तथाहि—सूर्यो येन रथेन समस्तं सौरमण्डलम् प्रकाशयति-तस्मिन् एकमेव चक्रम्। रथवाहकाः अश्वाः सप्त अर्थात् विषमसंख्याकाः सन्ति। अत्र सप्तेति संख्यायाः समभावाभावः वैषम्यं-अर्थात् विषमत्वं साहित्यिकवर्णनदृष्ट्या वैगुण्य सूचकम् इतिकविना ध्वन्यते। तेप्यश्वाः न स्वतंत्राः किन्तु भुजगयमिताः, सिर्पवेष्टिताः इति निगडवद्धत्वेन स्वक्रियाकरणे असमर्थाः। नेदमेव, सूर्यस्य अरुणनाभा सारथिः अनूरुःउरू रहितः चरणविकलः इतिहेतोः तस्यापि स्वक्रियाकारिकौशलम् व्याहृतमिति महान् अनर्थः। नेदमेव, सूर्यस्य रथमार्गोऽपि न सुगमः, न सौकर्यं धारयति। यतः आकाशस्थो मार्गः निरालम्बः आधाररहितः इति हेतोः रथस्य गतिः, नितान्तमसंभूता। एवं सत्यामपि अनर्थ-परम्परा संकुलाया स्थितौ भगवान् भास्करः प्रत्यह मपारस्य नभसः पारं निश्चप्रचं गच्छति इत्यत्र को हेतुः? सूर्यस्य सत्त्वम् अर्थात् विशिष्टव्यक्तित्वं हेतुः सूर्यस्य उपकरणानि, रथ,—अश्व-सारथि-मार्गादीनि सर्वाणि अनुपयुक्तोपकरणानि क्रियासाधकतां न भजन्ते। अतः सूर्यस्य स्वीये वैशिष्ट्ये अर्थात् सत्वे क्रियासिद्धिः तिष्ठति, न तूपकरणेषु इति साधूक्तं क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे।

अन्येष्वपि क्षेत्रेषु एतादृशी स्थितिः द्रष्टुं शक्यते। भारतवर्षस्य इतिहास एवात्र निदर्शनं भवितुमर्हति। स्वातंत्र्यान्दोलनसमये कांग्रेससंस्थया विदेशीयैः शासकैः सह संघर्षं कृत्वा स्वराज्यं लब्धमिति सर्वविदितमेव। तस्मिन् संघर्षे अहिंसाव्रतधारिणः कांग्रेसीयाः निरस्त्राः आसन्। विदेशीयशासकास्तु अस्त्रशस्त्रैः समवेताः हिंसामत्यजन्तः विजयायोपयुक्तैः सर्वोपकरणैः सहिता अपि राष्ट्रपितुः गान्धीमहात्मनः वैयक्तिकमहिम्ना समाक्रान्ताः पराजयमलभन्त। तत्र कांग्रेसीयानां सत्त्वमेव विजयहेतुतां गतम् इति सर्वविश्रुतम्। अतः तत्रापि उपकरणापेक्षया सत्त्वस्यव प्रतिष्ठा दरीदृश्यते।

सत्वशाली पुरुषः एकाक्यपि विजयश्रियं स्वाभिमुखं समाकर्षति। असत्यशालिनो जनसंमर्दा अपि पराभवं व्रजन्ति। तत्र संख्यायाः तादृशम् महत्वं न यादृशं गुणस्य। अयं गुणपरिमाणयोः परस्पर-भेदो विजयपराजययोनिर्णायको भवति। एकश्चन्द्रः तमोहन्ति न च तारागणोऽपिच। संख्यैकत्वं बहुत्वं वा अकिञ्चित्करम् सिद्धिप्रदायकम् चन्द्रस्थ सत्त्वम् प्रकाश-प्रसारण क्षमं भवति। खद्योतवत् अल्पप्रकाशः तारागणः बहुलसंख्येऽपि तमोनिवारणेऽसमर्थो भवति। विभिन्नपशुसंकुले वने यत् मृगेन्द्रस्य मृगेन्द्रता न संख्यामूलिका। विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता। खलु वने कश्चन मृगराजस्य राज्याभिषेकं करोति, स्वविक्रमेण सर्वान् पराभूय स्वकीयराजपदार्हतां साधयति। तस्य सर्वातिशापि शौर्यं तत्र निमित्तम्।

संसारेऽस्मिन् सर्वत्र उच्चनीचभावः परिदृश्यते। कश्चन स्वसत्त्वकारणेन उन्नतपदं भूषयति, सर्वमान्यश्च भूत्वा सर्वैरपि श्रेष्ठत्वेन स्वीक्रियते। अन्ये तथाविध विशेषगुणहीनाः सन्तः सामान्यपदलाभेनैव आत्मानं धन्यं मन्यन्ते। कृतार्थतां चानुभवन्ति। अत्र भेदः किंनिमित्तः विशिष्टव्यक्तित्वरूपसत्वस्य भावाभावौ एव तत्र निमित्तम्। तत्सत्त्वे सर्वमपि क्रियाजातं सफलतां गच्छंति। तदभावे तु फलोन्मुखमपि कार्यं विफलं संजायते। तदा क्रियासाधकान्यपि उपकरणानि अनुपकरकानि सम्पद्यन्ते। अनुकूलान्यपि निमित्तानि विपरीतानि जायन्ते। वैपरीत्येतु अकिंचित्करवत् प्रतीयमानानि उपकरणानि सर्वेष्टसम्पादकानि भवन्ति। दृश्यताम् क्रोधं प्रभो संहर संहरेति देवप्रार्थनामुपेक्षमानस्य रुद्रस्य कोपेन भस्मावशेषतां नीतो मदनः सर्वं जगत् वशीकरोति। दग्धशरीरत्वेन सर्वथा निरालम्बः सामर्थ्यहीनश्च कामदेवः। तस्य धनुः कोमलपुष्पनिर्मितम्। ज्या चलन्मधुकरश्रेणीमयत्वेन शिथिलबन्धा। शरः अपि चंचलाक्षीनाम-विश्वसनीयनेत्रैककोणत्वेन सूक्ष्मरूपः। सुहृच्च जडात्मा हिमकरः। सत्यामप्येवं विपरीतस्थितौ चन्द्रः स्वसत्त्वस्य महिम्ना त्रिभुवनं व्याकुलयति इत्यहो विस्मयावहं कामदेव शौर्यम्। सर्वातिशायिवीर्यशालिषु महाजनेषु अप्रतिमं कामदेवस्य उदाहरणम्। एतदेव सर्वं भावजातं मनसि निधाय उपसंहरन् कविः शिखरिणी-छन्दसा स्वाभिप्रायं व्याजहार—

"धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशाम्। दृशां कोणो वाणः सुहृदपि जडात्मा हिमकरः। तथाप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति। क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे।'

सत्त्वे क्रियासिद्धिर्भवतीति समानार्थमेवेदं सुभाषितम्–'सत्त्वाधीना हि सिद्धयः। इत्यलं पल्लवितेन।

[दिनांके (२२-७-१९७२) आकाशवाणी वार्तावसरे लिखितम्—]

# १६. कः परः प्रियवादिनाम्

गीतायां निर्दिष्टाः इष्टानिष्टोपपत्तिषु समचित्ताः स्थितप्रज्ञाः विरला एव जना जगति भवन्ति। सर्वोऽपि जन इष्टं लब्ध्वा सुखमनुभवति। इष्टः प्राप्तये सदेव यतमाना नराः इष्टं श्रोतुं द्रष्टुंवा नितरां समुत्सुकाः भवन्ति। अनिष्टाच्च परावर्तन्ते। "भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः" इति महनीये वैदिकमंत्रे प्रार्थना क्रियते यत् हे देवाः वयं स्वनेत्राभ्यां भद्रमेव पश्येम, कर्णाभ्यां च भद्रमेव शृणुयाम। प्रियसमाचारश्रवणं प्रियवस्तुदर्शनं च सर्वेषां प्रियं आनन्दावहं च भवति। अतिएवोक्तं बाणकविना यत् को-हि-नाम प्रियं नाभिलषति इति।

एवं प्रियस्य अभीष्टत्वे सिद्धे जाते प्रियवचनस्याभीष्टत्वं सुतरां सिद्धमेव। प्रियवचन-स्याभीष्टत्वे स्वीकृते प्रियवादिनो जनस्यापि अभीष्टत्वम् उपपन्नं भवति। अतएव प्रियवादिनः सर्वत्र समीह्यन्ते अभिनन्द्यन्ते च। सर्वे जनाः प्रियवादिनं जनं मित्रवत् मन्यन्ते। तेन सहमित्रवत् व्यवहरन्ति। प्रियवादिनः जनस्य सर्वं जगत् सुहृत्समितं भवति। एतदेव आदर्शाचरणंमत्वा यजुर्वेदे पठयते मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे' इति। सकलमपि जगत् आत्मनोऽनुकूलं कर्तुम् इदं रामबाणौषधिः यत तथा व्यवहतव्यं यथा अस्माकं आचरणेन सर्वे प्रीताः भवेयुः। प्रीतो हि जनः न वैरमनुबघ्नाति। किन्तु सौहार्ददृष्टिं धारयति। सौहार्द- वातावरणे सर्वथा निवासं कुर्वन् नरः न जगतो विरज्यति, नापि कञ्चन द्वेष्टि। अजातशत्रुर्हि सः जने मन्यते। तदेवं प्रियवादिनां न कोऽपि विरुद्धमाचरति, शत्रुर्वा भवति। तस्मात् कारणात् एतत्सुभाषितं प्रथितं यत् 'कः परः प्रियवादिनाम्।'

इदानीमिदं विचार्यते। जनाः प्रियं वदेयुः इति स्वीकृतम्। परं सर्वदा प्रियं, सत्यं व भवति। बहुशः प्रियमनृतमपि भवति। तत् किं प्रियभाषणाग्रहे प्रसंगे असत्यं वक्तव्यम्, अथवा असत्यप्रियं परिहरणीयं। अपरिहारे प्रियवादिनाम् असत्यभाषणप्रसङ्गः समापतेत। सत्यभाषणा-ग्रहे तु अप्रियभाषणस्य संकटः अनिवार्यः। एवं महति विरोधे समागते किमस्भामिः कर्तव्यम्? सत्यं परिहरणीयम् कटु वा भाषणीयम्। यदि तूष्णीं भावानुसारणे कार्यनिर्वाहः स्यात्, तर्हि इष्टं नः समीहितं। न कोऽपि तत्र विसंवादः। धर्मशास्त्रकाराः अपि कथयन्ति सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात्सत्यमप्रियम् प्रियंच नानृतं ब्रूयात् एष धर्मः सनातनः। तत्कालोचितधर्मस्य प्रतिपादनं कार्य निर्वाहकं सौविध्यावहं भवेन्नामने किन्तु सर्वकालीनधर्मप्रतिपादनमेव धर्मशास्त्रस्य कर्तव्यमृ अस्ति। शाश्वतधर्मः सनातनधर्मः यः सना अर्थात् सर्वदा त्रिकालाबाधितरूपेण उपयुज्यमानः धर्मः सनातनो धर्मः। प्रियसत्ययोर्मध्ये विरोध संकटेसमागते कः अनुसरणीयो धर्मः इति अस्मिन् श्लोके निर्दिश्यते। सत्यं ब्रूयात् प्रियं बूयात् इति प्रथमः कल्पः। यदि वक्तव्यं वस्तु; सत्यं परन्तु अप्रियं स्यात्, तदा किं कर्तव्यम्। तत्र अनेन श्लोकेन समाधीयते यत् किमपि न ब्रूयात्। परिहृत्तरेत्र

भाषणम्। मौनमेवावलम्बेत। किन्तु कदापि अप्रियं न वदेत्। एवमेव यदि कदाचित वक्तव्यं प्रियं, परन्तु असत्यं स्यात् तदा किं कर्तव्यम। पूर्वप्रश्नेसत्यस्थ प्रियेण विरोधः आसीत अस्मिन् प्रश्ने तु प्रियस्य सत्येन विरोधः। तथाहि, यद् वक्तव्यं अस्ति, तत् प्रियं, किन्तु असत्यमस्ति। तदा किं कर्तव्यम्? सनातनधर्मः उपदिशिति प्रियं च नानृतं ब्रूयात्। किमपि न ब्रूयात् इति भावः। अर्थात् तथाविधस्थलेऽपि भाषणं परिहरेत्, मौनमेवावलम्बेत। किन्तु यदि ब्रूयादेव तर्हि यद् ब्रुयात तत् सत्यं प्रियं च उभयमपि स्यात्। अतएव उक्तं 'सत्यं' ब्रूयात्--प्रियं ब्रूयात् प्रियसत्ययोः परस्परविरोधे अन्यतर्राषिये आग्रहं न कुर्यात्। एककालावच्छेदेन उभयमपि सहैव आश्रयणीयम्। एकान्तवादानेकान्तवादर्मध्ये अनेकान्तपक्षः श्रेयान् उक्तं हि योह्येकसक्तः स नरो जघन्यः अर्थात् केवलं सत्यं केवलं प्रियं वा भाषमाणो नरः जनैः तिरस्क्रियते। जनतायां संमानस्य आदरस्य च प्राप्तये इदं परमावश्यकं यत्सत्य भाषणं प्रियभाषणात्मकमेव साकमेव स्यात्। तथा सत्येव एव जनप्रियता लोकसम्मानः च लभ्यते। 'न ब्रूयात् सत्यमप्रियम्, तथा प्रियं च नानृतं ब्रूयात् इति श्लोकस्थे वाक्यद्वये इदमेव श्रेयस्करम् उपादेयं च तत्त्वं प्रतिपादितमस्ति।

एवंप्रकारेण सत्यप्रिययोः परस्पर-सम्बन्धे अन्यतरस्य अपरित्याज्यत्वं च प्रतिष्ठाप्येदानीं हितप्रिययोः सम्बन्धो निरूप्यते। तथाहि, प्रियमपिद्विविधं सम्भवति। हितमहितं च। तत्र हितात्मकं प्रियं वक्तव्यम्, अत्र न कस्यचिद् विचिकित्सा। विचिकित्सा उदेति तदा, यदा प्रियस्य हितेन यौगपद्यं नास्ति। भवति तत्र सन्देहः अहितं प्रियं ब्रूयात् न वा एतादृशे स्थले। अहितं ब्रूयात् इति न कश्चित् उपदेक्ष्यति। प्रियं ब्रूयात् इत्युपदेशे सम्मतेऽपि अहितं ब्रूयात् इति न कोऽपि अनुमन्यते। अतः अहितं यदि प्रियं तर्हि न ब्रूयात् इन्येव निश्चेतव्यं स्यात्। हितं प्रियम् इति उभयमपि यौगपद्येन मनसि विचार्य वदेत् इति सर्वसम्मतः पन्थाः। परन्तु नेदं सुकरम्। तथाविधं प्रियहितयोः योगपद्यं क्वचिदेव लभ्यते। अतएव सुभाषितमिदं महाकवि-भारविन्धं साग्र हमुपन्यस्तम् "हितं मनोहारि च दुर्लभं वचः। मनोहारि अर्थात् प्रियम्।तदेवं सत्यप्रिययो र्युग्मवत् हितप्रिययोरपि युग्मम् उपादेय कोटौ गण्यते। अभेदमपि अवधेयम्। यौगपद्यन प्रियहितयोः परस्परसम्बन्धस्य स्पृहणीयत्वेऽपि यथा प्रियं हितं च वचो दुर्लभं, तथैव अप्रियहितस्य श्रवणमपि जन्नानामनभिलषितं भवति। न कोऽपि अप्रियहितं श्रोतुं बद्धारो दृश्यते। तदेवं अप्रियहितस्य यथा वक्तारो दुर्लभाः, तथा श्रोतारोऽपि। अतएवोच्यते नीतिकारैः—अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः। पथ्यमर्थात् हितम्। रोगिणाम आतुराणामुप चारे औषधसेवनेन सह किंचिदन्यदपि नियम्यते, किं भोक्तव्यम् रोगिणा हति। यदेव भोज्यत्वेन विधीयते तदेव पथ्यमिति कथ्यते। तस्य पथ्यस्य खलु विशिष्टो महिमा। एवं निर्दिष्टमायुर्वेदशास्त्रे, पथ्ये सति गदार्तस्य किंमौषधनिषेवणैः। पथ्योऽसति गदार्तस्य किमौषधनिषेवणैः इति। पथ्यसेवनाभावे औषधसेवनं व्यर्थप्रायम्। पथ्यसेवने कृते तु औषध सेवनस्य आवश्यकतेव क्षीयते। एवंप्रकारेणः पथ्यस्य हितावहत्वं सूपपन्नम्। अथेदानीं प्रियभाषणस्य विवेचने इदमपि विचारपथमवतरति---यत् प्रियं कीदृशं स्यात्–क्षणिकप्रियं, सर्वकालीनप्रियं वा? नेदं तिरोहितं बुद्धिमतां, यत् किंचित् वस्तु प्रियं भवति किन्तु आपातप्रियमेव तत् अस्ति। परिणामे तस्य प्रियत्वं लुप्यते। अपरं वस्तु तु वर्तमानकाले प्रियं अस्त्येव परन्तु भविष्यत्कालेऽपि तत प्रियं

स्थास्यति। कालभेदेन तत्र भेदो न भवति। एवंविधस्थ द्विविधप्रियस्य उपादेयत्वानुपादेयत्व विचारे द्वितीयविधं प्रियमेव स्वीकार्यम्, आपाते प्रियं पर्यन्तेऽप्रियं कथमपि प्रियत्वेन न ग्राह्यम्। तस्य वैरस्ये पर्यवसानात्। संप्राप्तायां विरसतायां प्रियभाषणजन्यं सौहार्दमपि वैरे परिणमते। अर्थात् तथाविधप्रियवदिनो जनस्य शत्रवो न असम्भूताः। ततश्च कः परः प्रियवादिनाम्' इति मूलवाक्यमेव विप्रतिपन्नं स्यात्। तदेव मुपपन्नंयत् सर्वकालीनप्रियवादिनो जनस्य शत्रवो न भवन्ति। कः परः ? अर्थात् न कोऽपि परः इति निषेधे तात्पर्यम्। प्रश्नमुखेन निषेधस्येदं सुभाषित-मुदाहरणम्। इत्यदो विचित्रः संस्कृतसाहित्ये सुभाषितस्य वक्रोक्तिप्रकारः इति शम्।

**[दिनांके (९-१२-१९७२) आकाशवाणी वार्तावसरे लिखितम]**

# हिन्दी-निबन्धावली

⊙

## वेद



⊙

## व्याकरण



⊙

## साहित्य

⊙

## दर्शन



⊙

## विज्ञान



⊙

## इतिहास तथा शोध



⊙

## विविध

⊙

## संस्मरण



⊙

## समीक्षा

# १. वेद : इतिहास या साहित्य ?

भाषाशास्त्रियों का यह सर्वमान्य मत है कि विश्व में आज जितना भी लिखित साहित्य हमें मिलता है, उसमें ऋग्वेद सबसे प्राचीन है। प्राचीनता, विषय-व्यापकता और काव्य-सौन्दर्य सभी दृष्टियों से समस्त सभ्य साहित्य में ऋग्वेद अग्रगण्य है।

ऋग्वेद किसी एक काल-विशेष, स्थान-विशेष, व्यक्ति-विशेष, कुल-विशेष की रचना नहीं है। बल्कि संकलन-समय के पूर्व के अति विस्तृत कालखण्ड में, विभिन्न स्थानों में, विभिन्न कुलों में, भिन्न-भिन्न व्यक्तियों के द्वारा, समय-समय पर स्वयं स्फूर्ति से नानाविध विषयों पर जो रचनाएँ की गई थीं, उनमें से कुछ का—ध्यान रहे कुछ ही का—जो संकलनकर्ता की दृष्टि से अत्यन्त उपादेय और अविस्मरणीय थीं, संकलन आज के ऋग्वेद में पाया जाता है।

यह सर्वमान्य सिद्धान्त है कि प्रत्येक ग्रन्थ अपने युग का प्रतिबिम्ब होता है। ऋग्वेद इस नियम का अपवाद नहीं है। इसकी ऋचाओं में भी तत्कालीन समाज और उसके इतिहास की विश्वसनीय सामग्री निहित है। उसके आधार पर ऋग्वेदकालीन समाज और इतिहास का चित्र खींचा जा सकता है। ऋग्वेद में हम आर्यों को दस्यु, दास, असुर आदि अनार्य जातियों के विजेता के रूप में देखते हैं। वे अभी तक समस्त भारत में नहीं फैल पाये थे। उनके सप्तसिंधु प्रदेश में गंगा नदी पूर्वी छोर पर थी। वशिष्ठ, विश्वामित्र आदि कुलगुरुओं की अध्यक्षता में आर्यों के अनेक वंश इस प्रदेश में प्रतिष्ठापित हो चुके थे। यह सब कार्य बिना युद्ध या रक्तपात के हुआ हो यह बात नहीं। इसके लिए दीर्घकालीन संघर्ष हुए थे। दिवोदास के पुत्र सुदास के 'दाशराज्ञ युद्ध' का हृदयग्राही वर्णन ऋग्वेद में आया है। पाँच आर्यवंशी और पाँच अनार्यवंशी राजाओं के एक सम्मिलित संघ ने सुदास पर आक्रमण किया था किन्तु वशिष्ठ के प्रभाव से सुदास विजयी हुआ। साठ हजार दुहृचु और ६ सौ अनु इस युद्ध में खेत रहे। इसी प्रकार वेदों की सहायता से सामाजिक स्थिति का भी चित्रण किया जा सकता है। आर्य लोग रथों पर चढ़ते थे। गोपालन और कृषि उनके मुख्य व्यवसाय थे। सोम और सुरा का पान, एक धार्मिक विधि के रूप में अनुमत था। पश्चिमीय देशों से समुद्र द्वारा उनका व्यापारिक सम्बन्ध था। ऋग्वेद में समुद्र शब्द अनेक बार आया है। आर्यों का सप्तसिंधु प्रदेश एक उपजाऊ भूमि में था। इसी से लोग सुखी और समृद्ध थे। सत्य और व्यवस्था का आदर किया जाता था। व्यभिचार, चोरी और डाका, बुरे व्यसन माने जाते थे। ऋग्वेद काल में स्त्रियाँ, उत्तर काल की अपेक्षा, अधिक आदरपात्र और स्वतंत्र मानी जाती थीं। वे न केवल यज्ञ कर्म में भाग लेती थीं, बल्कि वैदिक मंत्रों की रचना भी करती थीं। मंत्रपाठ या अग्नि में आहुति के द्वारा देवताओं

की आराधना की जाती थी। आर्य लोग वेदों से वीर पुत्र, पशु और सुवर्ण का आशीर्वाद चाहते थे। जीवन में आनन्द का अनुभव और रुचि होने के कारण वे पलायनवाद या वैराग्य मार्ग को नहीं मानते थे। उनके मनोरंजनों में रथ दौड़ाना, द्यूत, नृत्य, संगीत आदि को प्रमुख स्थान था।

अब वेदों के साहित्यिक पक्ष को देखना चाहिए। सृष्टि के आदिम युग के समान, ऋग्वेद की काव्यकला सीधी-सादी और अकृत्रिम है। उसमें शब्दों की बनावट नहीं। अर्थ का छल नहीं। ऋग्वेद का कवि सीधे-सादे शब्दों में अपने हृदय को सामने रखता है। ऋग्वेद के प्रथम सूक्त में कवि अग्निदेव से प्रार्थना करता है :

**स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये ॥१।१।९**
**यदिन्द्राऽहं यथा त्वमीशीय वस्व एकइत्। स्तोता मे गोषखा स्यात् ॥ ८।१४।१**
**यदग्ने मर्त्यस्त्वं स्यामहं मित्रमहो अमर्त्यः। सहसः सूनवाहुत ॥ ८।१९।२५**
**न त्वा रासीयाभिशस्तये वसो न पा पत्वाय सन्त्य।**
**न मे स्तोतामतीवा न दुर्हितः स्यादग्ने न पापया॥ ८।१९।२६**

"हे अग्नि, तुम मेरे पिता के समान हो, इसलिए मैं जब चाहूँ तुम्हारे पास एक पुत्र की तरह सीधे आ सकूं, ऐसी कृपा करो। मेरे कल्याण के लिए तुम सदैव तैयार रहो।" ऋग्वेद का कवि देवता को अपने निकट की वस्तु समझता है, ऊँच-नीच या सेव्य-सेवक का भाव नहीं मानता। तभी तो वह कहता है—"हे इन्द्र, यदि मैं तुम्हारे समान धनी होता, तो अपने भक्तों को पशुओं की कमी न होने देता।" (ऋ० ८.१४.१) "यदि मैं अमर होता और तुम मर्त्य होते, तो हे अग्निदेव, तुम देखते कि तुम और अन्य भक्तगण शाप, गरीबी, अभाव, बीमारी के कष्ट को कभी न झेलने पाते।" (८.१९.२५) उषाकाल के प्राकृतिक सौन्दर्य का वर्णन कितना सजीव और कवित्वमय है, देखिए :

**एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात्।**
**अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ॥५।८०।५**
**एषा प्रतीची दुहिता दिवो नॄन्योषेव भद्रानि रिणीते अप्सः।**
**व्यूर्ण्वती दाशुषे वार्याणि पुनर्ज्योतिर्युवतिः पूर्वथाकः ॥५।८०।६**

"स्वर्ग की कन्या, उषा रात्रि के अंधकार को दूर करती हुई हमारे सामने आ खड़ी है। सद्यस्नाता वधू के समान अपने अंग-प्रत्यंगों के सौंदर्य को वह समझती है। इसी से तो वह सीधे तनकर खड़ी है, ताकि हम उसका पूर्ण दर्शन कर सकें।" दूसरी ऋचा में कवि कहता है : "शुभ्रशीला वधू के समान, स्वर्गकन्या उषा, लोगों के सामने सर झुकाये अपना सौन्दर्य दिखा रही है। अपने भक्तों को वरदान देती हुई, उषा आज भी हमेशा की तरह प्रकाश लेकर आई है।" वास्तव में उषा के वर्णन में काव्यकल्प का मनोरम चित्रण मिलता है। ओजस्वी तथा ज़ोरदार वर्णन के लिए इन्द्र अपूर्व है। सोमपायी, वज्रबाहु और वज्रधारी इन्द्र को कौन नहीं

जानता ? वरुण देव के सूक्तों में एक दूसरा ही वातावरण है। वहाँ नैतिक आधार के प्रति निष्ठा है। ऋत और सत्य के प्रतिष्ठापक वरुण देव के सम्मुख कवि का हृदय भयभीत और पश्चात्तापपूर्ण है। मानवसुलभ कमज़ोरियों का हृदयग्राही वर्णन है। कवि कहता है :

**अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद्भ्रातरं वां।**
**वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रयस्तत् ॥५।८५।७**
**न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः।**
**अस्ति ज्यायान्कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥७।८६।६**

"हे वरुण ! यदि अपने किसी भाई, मित्र, साथी, पड़ोसी या परदेशी के प्रति हमने पाप कार्य किया हो तो हे वरुण देव ! क्षमा कीजिये तथा अपने दण्ड से बचाइये। मैं अपने मन ही मन विचारता हूँ कि देव वरुण, कब मुझे अपने हृदय में स्थान देंगे ? वह दिन कब आयेगा जब मैं वरुण देव की क्षमा प्राप्त कर अपने को प्रसन्न मन पाऊँगा। हे देव ! यह अपराध मैंने जानबूझ कर नहीं किया है। इसके पीछे धोखे बाजी, मदिरा प्रभाव, क्रोध, जुआ खेलने की लत या असावधानी भी हो सकती है। शायद बड़ों के प्रभाव में पड़ कर मैंने यह दुष्कृत्य किया है। यह भी हो सकता है कि इसकी प्रेरणा मुझे स्वप्नावस्था में मिली हो।"

यहाँ यह भी जान लेना चाहिए कि ऋग्वेद में देवतास्तुति के अतिरिक्त अन्य अनेक मनोरंजक विषयों पर भी सूक्त मिलते हैं। इनमें यम-यमी-संवाद और उर्वशी-पुरूरवस् संवाद विशेष रूप से आकर्षक हैं। भाषा-सौन्दर्य के साथ-साथ कल्पना माधुर्य भी इनमें दृष्टिगोचर होता है। यम के तिरस्कार से निराश होकर यमी कहती है :

**बतो बतासि यम नैव ते मनो हृदयंचाविदाम।**
**अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम् ॥१०।१०।१३**

"यम तुम दुर्बल हृदय हो, तुममें सहृदयता और दाक्षिण्य का पूर्ण अभाव है। तुम सदा ऐसे ही न रहोगे। कभी न कभी तो कोई दूसरी आकर लता के समान तुम्हें अपने बाहुपाश में बाँधेगी।" अब पुरूरवस् को समझाती हुई उर्वशी के सान्त्वनापूर्ण शब्द सुनिये :

**पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन्।**
**न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता ॥१०।९५।१५**

"हे पुरूरवस् ! दुखी न हो तथा आत्मघात की न सोचो। क्या तुम यह नहीं जानते कि स्त्रियों से मैत्री स्थायी नहीं हो सकती ? स्त्रियों का हृदय भेड़िये के हृदय के समान कठोर और निर्दय होता है।" एक सूक्त में एक जुआरी कहता है :

**द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दत मर्डितारम्।**
**अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम् ॥१०।३४।३**

"जुआरी का जीवन सचमुच दुःखी जीवन है। उसकी सास उससे घिनाती है। पत्नी दूर भागती है। कोई भी उसे आश्रय देने को तैयार नहीं होता। जैसे बूढ़े घोड़े को कोई नहीं पूछता, उसी प्रकार जुआरी का जीवन भी दूभर हो जाता है।" आध्यात्मिक दर्शन की दृष्टि से नारदीय सूक्त का महत्व आज भी महत्वपूर्ण है। सृष्टि के आरम्भ के विषय में जिज्ञासा करता हुआ कवि कहता है :

**इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।**
**यो अस्याध्यक्षः परमे व्योमन् सो अंग वेद यदि वा न वेद ॥१०।१२९।७**

"यह सृष्टि कहाँ से आई? जिससे यह उत्पन्न हुई, क्या उसने जान-बूझ कर सृष्टि बनाई थी? सर्वोच्च आकाश में जो इसका सदैव निरीक्षण किया करता है, वह भी इस प्रश्न का उत्तर जानता है या नहीं—इसमें सन्देह है।" दार्शनिक क्षेत्र में स्वतन्त्र विचारप्रगल्भता और विशुद्ध तर्कानुराग का ऐसा उदाहरण शायद ही कहीं मिले।

हम ऊपर वेदों के आध्यात्मिक पक्ष का निर्देश कर चुके हैं। क्षण भर के लिए रहस्यपूर्ण आध्यात्मिक पक्ष को छोड़ भी दिया जाय तो भी यह कहना कठिन है कि वेद साहित्य की वस्तु हैं या इतिहास की। भारतीय वाङमय परम्परा में इतिहास का अर्थ केवल राजनीतिक घट-नाओं का निर्देश नहीं है। इतिहास जीवन के सभी अंगों को छूता है। वेदों में जीवन के विविध अनुभवों और रूपों का निर्देश है और इस अर्थ में वेद इतिहास-ग्रन्थ हैं। साथ ही कविता कला के अनुपम उदाहरणों से वेदों का साहित्य पक्ष भी सर्वथा पुष्ट है। अतः यदि यह प्रश्न पूछा जाय कि "वेद साहित्य हैं या इतिहास?" तो इस प्रश्न का समुचित उत्तर होगा कि वेद, साहित्य और इतिहास, दोनों हैं, एवं साथ ही कुछ और भी।

**[आकाशवाणी नागपुर से प्रसारित वार्ता, २५-४-१९५३, एवं आकाशवाणी विविधा वर्ष १, अंक १ में प्रकाशित]**

# २. वेदों की अपौरुषेयत्व-कल्पना का कारण

भारतीय ज्ञान बीजरूप से वेदों में निहित है। इसीलिये उन्हें भारतीय ज्ञान-निधि कहा जाता है। इतना ही नहीं, प्राचीनत्व और ज्ञानगरिमा के कारण, आस्तिक-भारतीय की दृष्टि में, वे अपौरुषेय, तथा ईश्वर-कृत भी हैं। प्राचीन परम्परा में पले भारतीय-विद्वान् के लिए, किसी भी मत, या सिद्धान्त का स्वीकार, या तिरस्कार उसके वेदानुमोदित, या वेद विरुद्ध होने पर है। वेदों को यह अपूर्व गौरव आज से नहीं, हजारों वर्ष से प्राप्त है। भारतीय संस्कृति की भित्ति-शिला वेदों की इस अनन्य-जुष्ट महिमा पर ही अवलंबित है। वेदों की अपौरुषेयत्व कल्पना एक स्वतः सिद्ध सिद्धान्त के रूप में मानी जाती है। किन्तु इस अपौरुषेयत्व कल्पना के विकास का भी एक इतिहास है। यह कल्पना एक दिन, या एक मन की उपज नहीं है। इसके विकास में भारतीय वाङमय और विचार परम्परा का विकास अनुस्यूत है। ऐतिहासिक दृष्टिकोण, और वैज्ञानिक विचार-पद्धति से विमर्श करने पर, इस अपौरुषेयत्व कल्पना के इतिहास का एक चलता चित्र खींचा जा सकता है।

सर्व प्रथम हमें यह जानना चाहिये कि, वेद स्वयं अपने विषय में क्या कहते हैं। ऋग्वेद के ऋषि अपने मंत्रों में निम्न प्रकार के उल्लेख करते हैं; जैसे (१) "हे देव, तुम्हारी उपासना प्राचीन और नवीन ऋषियों ने की है।" (२) "इन मंत्रों की रचना बड़े परिश्रम से (शब्दों को काट-छाँट कर) की गई है।" (३) "ये मंत्र, हे देव, तुम्हारी स्तुति में मैंने बनाये हैं, आशा है कि तुम्हें ये पसन्द होंगे।" आदि। ऋग्वेद में अधिकांश मंत्र स्तुति-परक हैं। उन में एवंविध उल्लेखों से स्पष्ट है कि उनके रचयिताओं के मन में इन मंत्रों के अलौकिक या अपौरुषेय होने की कल्पना न थी, और न वे दावा ही करते हैं कि उनके मंत्रों में कोई खास विचित्रता है। हाँ, कभी-कभी वे अपनी प्रतिभा या सामर्थ्य (सबाधः विप्रः) का उल्लेख कर देते हैं, किन्तु इसमें कवित्व-प्रतिभा या आतमगौरव ज्ञान ही अभिप्रेत है। वैदिक-युग के उत्तरकाल में, अथर्ववेद और ब्राह्मण ग्रन्थों के समय में, इस प्रकार के विधान अनेक बार किये गये हैं कि वेदों की उत्पत्ति अग्नि, वायु और सूर्य आदि देवों से हुई है। किन्तु ब्राह्मण-ग्रंथ स्वयं अपने विषय में देवोत्पन्न होने का दावा नहीं करते हैं। उनमें वेद मंत्रों की सरसरी व्याख्या और यागकर्म की विस्तृत विवेचना है। ब्राह्मण रचनाकाल के बाद के युग में, ब्राह्मण-ग्रन्थ भी मंत्र भाग की तरह "श्रुति" समझे जाने लगे। तर्क यह था कि ब्राह्मण ग्रन्थों में स्वर्ग प्राप्ति या अन्य अलौकिक चमत्कार-पूर्ण बातों का विवेचन होने के कारण वे पुरुषकृत कैसे हो सकते हैं। यजुर्वेद-प्रतिपादित याग-संस्था का इस युग में प्राधान्य था। याग-कर्म में उपयुक्त यजुर्वेद के गद्य मंत्रों के रचयिताओं के नाम की परम्परा, उनमें कोई विशेषता न होने के कारण—ज्ञात न थी अर्थात् वे 'अज्ञात कर्तृक' थे। उनके साथ-साथ यागकर्म में प्रयुक्त ऋग्वेद के मंत्र भी,—

यद्यपि परम्परा से उनके रचयिताओं के नाम भलीभांति ज्ञात हैं,—'अज्ञातकर्तृक' माने जाकर अपौरुषेय समझे जाने लगे। उनके रचयिता लेखक-ऋषि न रहकर, द्रष्टा-ऋषि (ऋषयो मंत्र द्रष्टारः; ऋषिर्दर्शनात्) माने जाने लगे। अर्थात् उन ऋषियों ने वेद-मंत्रों की रचना नहीं की, उन्होंने मंत्रों को देखा (दैवी स्फूर्ति के कारण मंत्र उनके मुख से निकल पड़े)। जिन मंत्रों के ऋषियों के नाम अज्ञात थे, उनके परमेष्ठिन् प्रजापति-ऋषि माने गये। साथ ही ब्राह्मण ग्रन्थ भी संहिता मंत्रों के समान, अपौरुषेय माने गये और उन्हें श्रुति संज्ञा दी गई।

दर्शन युग में मीमांसा-दर्शन ने वेदों की अपौरुषेयता पर अत्यधिक जोर दिया। मीमांसकों का एक प्रबल-तर्क यह था कि, यदि वेद मंत्रों का कोई रचयिता होता, तो उसके नाम का ज्ञान अवश्य होता, जैसे कालिदास भवभूति आदि का नाम आज तक लोगों को ज्ञात है। मीमांसकों के मत से कठ-कलाप आदि ऋषि अपनी-अपनी शाखा के वेदों के संकलनकर्त्ता थे, रचयिता नहीं। इस प्रकार 'काठक' 'कालापक' आदि शाखा प्रवर्तक ऋषियों के नाम की उपपत्ति कर दी गई, तो भी वैदिक परम्परा द्वारा ज्ञात, और वेदानुक्रमणी में उल्लिखित मधुच्छन्दस, वैश्वामित्र, और जेतृ, माधुच्छन्दस आदि ऋषि तो संकलक नहीं माने जा सकते, क्योंकि वे शाखा प्रवर्तक नहीं हैं। अपिच, कई ऋषियों के नाम तो मंत्रों में ही साक्षात् उल्लिखित हैं। उनके विषय में संकलक की कल्पना नितान्त असम्भव है। उपर्युक्त कर्तृनुपलम्भ तर्क (कर्ता का न पाया जाना) के आधार पर मीमांसकों ने वेदों की अपौरुषेयता सिद्ध की, साथ ही वेदों को नित्य भी माना। इसीलिये उन्हें 'शब्द नित्यत्व' और 'शब्द पूर्वत्व' मानना पड़ा,—जो मीमांसा दर्शन की विशेषता है। किन्तु शब्द नित्यत्व से वेदों की नित्यता सिद्ध करने में विशेष सहायता नहीं मिल सकती, क्योंकि कालिदास कृत रघुवंश के सम्बन्ध में भी 'शब्द नित्यत्व' का तर्क उपस्थित किया जा सकता है। आश्चर्य तो यह है उत्तरकालीन मीमांसकों ने, वृथा ही शब्द नित्यत्व को वेदों की नित्यता सिद्ध करने के लिये महत्व दिया। हाँ, दूसरा सिद्धान्त 'शब्द पूर्वत्व' अवश्य मीमांसा शास्त्र की एक देन है। 'शब्द पूर्वत्व' का मतलब यह है कि शब्द पहिले आये, अर्थ बाद में। शब्दोच्चारण से अर्थ-सृष्टि होती है। महाकवि भवभूति ने इसी बात को बड़े अच्छे ढंग से कहा है: "ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति"—प्राचीन ऋषियों की वाणी के पीछे-पीछे अर्थ चलता है। वेदों में और पौरुषेयग्रन्थों में यही भेद है कि वैदिक मंत्र स्वप्रतिपाद्य अर्थ की सृष्टि कर सकते हैं, पौरुषेय ग्रन्थ नहीं। इस अलौकिक शक्ति के कारण वेदों की अपौरुषेयता और नित्यता सिद्ध करने का मीमांसकों ने प्रयत्न किया है। किन्तु उनके विरुद्ध एक प्रबल आक्षेप यह था कि वेदों में मानवों और तत्सम्बन्धी इतिहास के सम्बन्ध में अनेक उल्लेख पाये जाते हैं, जैसे प्रवहण पुत्र बबर, दिवोदास, वशिष्ठ आदि, जिनके कारण वेदों को अपौरुषेय मानना सम्भव ही नहीं है। इस आक्षेप का उत्तर जैमिनि ने यह कह कर टाल दिया कि वेदों में एवंविध उल्लेख शब्द मात्र से है, (परंतु श्रुति सामान्य मात्रम्) और उनमें किसी मर्त्य की ओर निर्देश नहीं किया गया है। बाद में यह भी कहा गया कि इन उल्लेखों का संकेत सृष्टि की नित्य वस्तुओं की ओर है, जैसे प्रवहण-पुत्र बबर का अर्थ बर्-बर् ध्वनि के साथ बहने वाला वायु। किन्तु एवंविध लचर व्याख्याओं से व्याकरण और कोश

की खींचातानी करने पर भी वेदों में, तादृश समस्त उल्लेखों की उपपत्ति नहीं की जा सकती। सच पूछा जाय तो वेदों के ऐतिहासिक सूक्तों की एकमेव यथार्थ-व्याख्या उनको ऐतिहासिक मानने में ही है। रूपक द्वारा आध्यात्मिक, या आधियाज्ञिक अर्थ निकालना केवल बुद्धि-प्रयास का द्योतक है। वेदानुक्रमणी में सुरक्षित परम्परा भी ऐतिहासिक व्याख्या का समर्थन करती है। मंत्रों में जिन ऋषियों के नाम दिये गये हैं, उन्हीं ऋषियों के नाम से उन मंत्रों को वेदानुक्रमणी ने उल्लिखित किया है। ऋग्वेद और ब्राह्मण ग्रन्थों में पायी गयी ऐतिहासिक घटनाओं का कभी-कभी पुराणों में अंशतः या पूर्णतः विवरण मिलता है। पुराणोल्लिखित घटनाओं की ऐतिहासिकता तो सभी को मान्य है। फलतः 'शकुन्तला नालपित्यप्सरा भरतं दधे' इस वैदिक मंत्र में उसी शकुन्तला-भरताख्यान की ओर संकेत है, जिसका विस्तृत वर्णन महाभारत के शकुन्तलोपाख्यान में पाया जाता है। यहाँ यह ध्यान देने योग्य है कि वेदों के अपौरुषेयत्व-स्थापन में, उपर्युक्त आक्षेप का खण्डन करते हुए सायण तथा अन्य भाष्यकारों ने तर्क के आधार पर, या शब्दच्छल से जो कुछ भी कहा हो, किन्तु वेदभाष्य में उन्हीं मंत्रों की व्याख्या करते हुए उन्होंने ऐतिहासिक व्याख्या की है। आश्चर्य है कि इस स्वमत-विरोध की ओर उनका ध्यान क्यों नहीं गया। ऐतिहासिक सन्दर्भ वाले मंत्रों के अर्थ विवरण में, मीमांसकों के उपर्युक्त मत का रहस्य समझने के लिये, हमें यह जान लेना चाहिये कि इस याग-प्रधान युग में ऋग्वेद का महत्व उतना नहीं रह गया था, और यज्ञप्रतिपादक-यजुर्वेद, और ब्राह्मण ग्रन्थ ही जिनमें एतादृश ऐतिहासिक उल्लेख वाले मंत्र, अपेक्षाकृत बहुत कम हैं—मीमांसकों के मस्तिष्क में प्रधानतया उपस्थित थे। सारांश यह कि इस युग में वेद के दोनों भाग—मंत्र और ब्राह्मण, नित्य और अपौरुषेय माने जाते थे। उसके भिन्न-भिन्न भागों का भिन्न-भिन्न समय में वशिष्ठ आदि ऋषियों या परमेष्ठिन् प्रजापति को दर्शन हुआ और उन भागों के वे 'ऋषि' माने गये। पूर्व मीमांसा-दर्शन में ईश्वरास्तित्व को साक्षात् स्थान नहीं है, अतः उनके मत में वेदों का ईश्वरकृत होना सम्भव ही नहीं था।

हाँ, वेदान्ती अवश्य वेदों को ईश्वर कृत मानते हैं, (यस्य निःश्वसितं वेदाः) सारी सृष्टि का स्रष्टा ईश्वर वेदों का भी कारण है। वेदान्तियों के मत से भी वेद नित्य हैं, किन्तु यह नित्यता, आकाश, वायु आदि तत्वों की नित्यता के सदृश आपेक्षिक-नित्यता है। प्रथम सृष्टि के आरम्भ में आकाश आदि की तरह ईश्वर द्वारा वेदों की उत्पत्ति हुई, बाद में अवान्तर सृष्टि के समय धाता ने पूर्व-सृष्टि की तरह उनकी फिर रचना कर दी। (धाता यथा पूर्वमकल्पयत्)। ईश्वर कर्तृक होने से वेदों का प्रामाण्य है, क्योंकि ईश्वर मानव-सुलभ सारे दोषों से मुक्त है। वेद ईश्वरीय होने के कारण फलतः अपौरुषेय हैं। इसी अर्थ में आज वेदों को अपौरुषेय कहा जाता है। इस प्रकार हम देखते हैं कि परम प्राचीनता के कारण अज्ञात कर्तृक-वेद, अन्त में ईश्वर-कर्तृक माने जाने लगे। अपौरुषेय पद में 'पुरुष' का अर्थ पहिले ज्ञात-पुरुष किया गया, बाद में अनीश्वर (ईश्वर भिन्न) अर्थ माना गया। सरसरी दृष्टि से वेदों की अपौरुषेय कल्पना के विकास पर ध्यान देने से उपरिनिर्दिष्ट चलता-चित्र सामने आता है।

**['विक्रम' (उज्जैन) के जुलाई १९४३ के अंक में प्रकाशित]**

# ३. संसार का प्राचीनतम ग्रन्थ : ऋग्वेद

आज के वैज्ञानिक युग की एक मुख्य विशेषता यह भी है कि प्राचीनता के प्रति लोगों की श्रद्धा घटती जा रही है। उनके मन में यह धारणा बद्धमूल हो रही है कि प्राचीन युग की परम्परा और ज्ञानराशि की उपयोगिता की चर्चा करना व्यर्थ है। वर्तमान युग के प्रगतिशील मानव को 'पीछे की ओर' देखने की न फुरसत है, न आवश्यकता ही है। किसी अंश तक यह मत उन राष्ट्रों के विषय में सत्य हो सकता है, जो विश्व के इतिहास में नये हैं, एवं जिनकी सभ्यता और संस्कृति का प्रारंभ कुछ शताब्दी पूर्व हुआ है। भारतवर्ष की ऐतिहासिक परम्परा और सांस्कृतिक जीवन पर ध्यान देने से यह स्पष्ट है कि यह देश एक बड़ा बूढ़ा देश है। अन्य राष्ट्र इसकी तुलना में अनुभवरहित बालकों के समान हैं। जीवन की सभी समस्याओं पर इतना विचार और इतने प्रयोग इस देश में किये गये हैं कि उस स्तर पर पहुँचने के लिये नवीन राष्ट्रों को कई शताब्दियाँ नहीं, सहस्राब्दियाँ लगेंगी। उन विविध प्रयोगों के फलस्वरूप जो निष्कर्ष निकाले गये हैं, और जिन सिद्धांतों पर यहाँ की समाज-व्यवस्था आधारित की गई है, उसका मूल्यांकन आज का संसार पूर्णतया अब तक नहीं कर सका है। अतः प्राचीनता के प्रति उपेक्षा-बुद्धि को त्याग कर हमें प्राचीन ज्ञानराशि से परिचय प्राप्त करना चाहिये। निम्न पंक्तियों में विश्व-वाङमय के प्राचीनतम ग्रन्थ 'ऋग्वेद' की चर्चा की जा रही है।

आज भाषा-शास्त्रियों का यह सर्वमान्य मत है कि आज जितना लिखित वाङमय विश्व में उपलब्ध है, उसमें 'ऋग्वेद' सबसे प्राचीन है। प्राचीनता, विषय-व्यापकता, काव्य सौन्दर्य—सभी दृष्टियों से समस्त सभ्य साहित्य में ऋग्वेद का स्थान अग्रगण्य है। अति पुरातन काल से भारतीय आर्य सिन्धु-सरस्वती के तट पर प्रकृति की विभूतियों की स्तुति में वैदिक ऋचाओं का पाठ और सरस सामों का गायन करते थे। वेद भारतीय संस्कृति और इतिहास की आधार शिलायें तो हैं ही, विश्व के इतिहास को जानने में भी वे उपयोगी सामग्री प्रस्तुत करते हैं। मानववंश के इतिहास को जानने के लिए जब तक हममें उत्कंठा और रुचि विद्यमान है और जब तक प्राचीन युगों के चिह्नों को हम अजायबघर में सुरक्षित रखना आवश्यक समझते हैं, तबतक आर्यजाति का इतिहास जानने के लिये ऋग्वेद की महिमा गायी जायेगी।

महर्षि वाल्मीकि ने कहा है कि जबतक पृथ्वीतल पर पर्वत खड़े हैं और नदियाँ बहती हैं, तबतक भारतीय लोक-मानस पर राम-कथा अटल बनी रहेगी। यही बात ऋग्वेद के सम्बन्ध

